एवं दग्धा भगवता दानवाः स्वेन तेजसा ।
अगस्त्येन तदा राजन् तपसा भावितात्मना ॥ १३ ॥

ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयाऽनघ ।
ब्रवीम्यहं ब्रूहि वा त्वमगस्त्यात् क्षत्रियं वरम् ॥ १४ ॥

भीष्म०—इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन् वसिष्ठस्य मुख्यं कर्म यशस्विनः ॥ १५ ॥

आदित्याः सत्रमासन्त सरो वै मानसं प्रति ।
वसिष्ठं मनसा गत्वा ज्ञात्वा तत्तस्य गौरवम् ॥ १६ ॥

यजमानांस्तु तान् दृष्ट्वा सर्वान् दीक्षानुकर्शितान् ।
हन्तुमैच्छन्त शैलाभाः खलिनो नाम दानवाः ॥ १७ ॥

अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः ।
हता हता वै तत्रैते जीवन्त्याप्लुत्य दानवाः ॥ १८ ॥

ते प्रगृह्य महाघोरान् पर्वतान् परिघान् द्रुमान् ।
व्यक्षोभयन्त सलिलमुत्थितं शतयोजनम् ॥ १९ ॥

अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव हि ।
ततस्तैरर्दिता देवाः शरणं वासवं ययुः ॥ २० ॥

स च तैर्व्यथितः शक्रो वसिष्ठं शरणं ययौ ।
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः ॥ २१ ॥

भाषा

भगवान् ने अपने तपोबल से दैत्यों को ऐसे जला कर नाश कर दिया जैसा कि मैंने तुमसे कहा और यह अगस्त्य महर्षि ब्राह्मण ऐसे हैं जैसा कि मैं कहता हूँ। तुम भी किसी क्षत्रिय का नाम लो जो अगस्त्य महर्षि से श्रेष्ठ हो । भीष्म के इस वचन को सुनकर अर्जुन चुप रहे और वायु ने पुनः कहा कि हे राजन् ! वसिष्ठ महर्षि का मुख्य कर्म सुनो ॥ १३—१५ ॥

मानस सरोवर के समीप अदिति के पुत्रों ने सत्र नामक यज्ञ आरम्भ किया ॥ १६ ॥ यज्ञ की दीक्षा से थके हुए उन यजमानों को खलिन नामक दैत्यों ने मारना चाहा क्योंकि जहाँ वे यज्ञ करते थे वहाँ से थोड़ी ही दूर पर वह सरोवर था जिसमें ब्रह्मा के वर के अनुसार मरे २ दैत्य डाल दिये जाते थे और वे पुनः जीवित होकर निकल आते थे ॥ १७ ॥ १८ ॥

उस सर के भीतर से खलिन नामक दश सहस्र दैत्य निकले जिनके वेग से उस सर का जल चार सौ कोस ऊपर तक लहर खाने लगा और बड़े भयानक पर्वतों और वृक्षों तथा परिघों को हाथों में ले लेकर उन सबने उन देवताओं को मारा और वे देवता इन्द्र को अगाड़ी कर भगवान् वसिष्ठ महर्षि के शरण गये और उन्होंने उन देवताओं को अभय दिया ॥ १९—२१ ॥

तदा तान् दुःखितान् ज्ञात्वा आनृशंस्यपरो मुनिः ।
अयत्नेनादहत् सर्वान् खलिनः स्वेन तेजसा ॥ २२ ॥
कैलासं प्रस्थिताञ्चैव नदीं गङ्गां महातपाः ।
आनयत्तत् सरो दिव्यं तया भिन्नञ्च तत्सरः ॥ २३ ॥
सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत् ।
हताश्च खलिनो यत्र स देशः खलिनोऽभवत् ॥ २४ ॥
एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः ।
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना ॥ २५ ॥
एतत् कर्म वसिष्ठस्य कथितं हि मयाऽनघ ।
ब्रवीम्यहं ब्रूहि वा त्वं वसिष्ठात् क्षत्रियं वरम् ॥ २६ ॥

अ० १५६, भीष्म०—इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः ॥ १ ॥
घोरे तमस्ययुध्यन्त सहिता देवदानवाः ।
अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ ॥ २ ॥
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः ।
देवा नृपतिशार्दूल सहैव बलिभिस्तदा ॥ ३ ॥
असुरैर्वध्यमानास्ते क्षीणप्राणा दिवौकसः ।
अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनम् ॥ ४ ॥

भाषा

उन देवताओं को दुःखित देख कर दयालु वसिष्ठ मुनि ने अपने तपोबल से सहज में उन सब खलिन दैत्यों का नाश कर दिया ॥ २२ ॥ और कैलास को गई हुई गङ्गा नदी को वहाँ ले आकर उस नदी से दैत्यों के उस सर को तोड़वा डाला और दैत्यों के उसी सर के तोड़ने से उस नदी का नाम सरयू पड़ा और खलिन वहाँ मारे गये, इसी से उस देश का नाम खलिन प्रसिद्ध हुआ । इसी से सरयू नदी को आज तक वासिष्ठी कहते हैं ॥ २३ ॥ २४ ॥ इस प्रकार से इन्द्र सहित देवता वसिष्ठ से रक्षित हुये और ब्रह्मा से वर पाने वाले दैत्य मारे गये ॥ २५ ॥ हे राजन् ! इस वसिष्ठ के कर्म को मैंने कहा और ब्राह्मण के अन्य कर्मों को भी कहता हूँ अथवा आप ही किसी क्षत्रिय को कहिये जो वसिष्ठ से श्रेष्ठ हो ॥ २६ ॥

अ० १५६, भीष्म०—वायु का ऐसा वचन सुन अर्जुन चुप रहे और वायु ने पुनः कहा कि हे राजन् ! महात्मा अत्रि महर्षि का कर्म सुनो ॥ १ ॥

एक समय घोर अन्धकार में देवता और दैत्य घोर युद्ध करते थे अर्थात् उस समय स्वर्भानु नामक दैत्य ने चन्द्रमा और सूर्य को बाणों से मारकर प्रकाश से हीन कर दिया और तदनन्तर अन्धकारप्रिय दैत्यों ने देवताओं को ऐसा मारा कि क्षीण प्राण होकर भागे और आगे जाकर तपस्या करते हुये अत्रि महर्षि को देखा ॥ २—४ ॥ उनसे कहा कि हे प्रभो ! दैत्यों ने सूर्य और चन्द्रमा

अथैनमब्रुवन् देवाः शान्तक्रोधं जितेन्द्रियम् ।
असुरैरिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ ॥ ५ ॥
वयं वध्यामहे चापि शत्रुभिस्तमसावृते ।
नाधिगच्छाम शान्तिञ्च भयात्त्रायस्व नः प्रभो ॥ ६ ॥
अत्रि०—कथं रक्षामि भवतस्तेऽब्रुवंश्चन्द्रमा भव ।
तिमिरघ्नश्च सविता दस्युहन्ता च नो भव ॥ ७ ॥
एवमुक्तस्तदाऽत्रिर्वै तमोनुदभवच्छशी ।
अपश्यत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥ ८ ॥
दृष्ट्वा जातिप्रभं सोमं तथा सूर्यञ्च पार्थिव ।
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे ॥ ९ ॥
जगद्वितिमिरं चापि प्रकाशमकरोत्तदा ।
व्यजयच्छत्रुसङ्घांश्च देवानां स्वेन तेजसा ॥ १० ॥
अत्रिणा दह्यमानांस्तान् दृष्ट्वा देवा महासुरान् ।
पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिताः ॥ ११ ॥
उद्भासितश्च सविता देवास्त्राता हतासुराः ।
अत्रिणा त्वथ सामर्थ्यं कृतमुत्तमतेजसा ॥ १२ ॥
द्विजेनाग्निद्वितीयेन जपता चर्मवाससा ।
फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम् ॥ १३ ॥
अस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः ।
ब्रवीम्यहं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम् ॥ १४ ॥

भाषा

को बाणों से मार कर मूर्च्छित कर दिया । हम लोग इस अन्ध असूझ अन्धकार में दैत्यों के हाथ से अनाथ से मारे जा रहे हैं । कोई दूसरा शरण नहीं सूझ पड़ता । इस महाभय से आप हमारी रक्षा करें ॥ ५ ॥ ६ ॥

अत्रि०—आपकी मैं किस प्रकार से रक्षा करूँ ? देवता०—आप सूर्य और चन्द्रमा होकर हमारे शत्रुहन्ता हो जायँ । तदनन्तर अत्रि महर्षि ने सूर्य और चन्द्रमा को मन्द देख कर अपने तपोबल से अन्धकार को नाश कर गगन को प्रकाशित कर दिया और इतना ही नहीं किन्तु उस प्रकार के सन्ताप से दैत्यों को जलते देख देवताओं ने अपने पराक्रम से भी दैत्यों को मारा और तदनन्तर चन्द्रमा और सूर्य में भी प्रकाश आ गया ॥ ७—१२ ॥

हे राजन् ! अग्नि के समीप जप करते हुये फलों के खानेवाले और मृगचर्म ओढ़ने वाले अकेले अत्रि महर्षि ब्राह्मण ने सहज में यह काम कर दिया जो कि मैंने तुमसे कहा और पुनः भी कहता हूँ अथवा तुम्हीं उस क्षत्रिय को कहो जो अत्रि से श्रेष्ठ हो ॥ १३ ॥ १४ ॥

इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन् महत् कर्म च्यवनस्य महात्मनः ॥ १५ ॥
अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम् ।
प्रोवाच सहितो देवैः सोमपावश्विनौ कुरु ॥ १६ ॥

इन्द्र०—अस्माभिर्वर्जितावेतौ भवेतां सोमपौ कथम् ।
देवैर्न शंसितावेतौ तस्मान्मैवं वदस्व नः ॥ १७ ॥
अश्विभ्यां सह नेच्छामः सोमं पातुं महाव्रत ।
यदन्यद्वक्ष्यसे विप्र तत् करिष्यामि ते वचः ॥ १८ ॥

च्यवन०—पिबेतामश्विनौ सोमं भवद्भिः सहिताविमौ ।
उभावेतावपि सुरौ सूर्यपुत्रौ सुरेश्वर ॥ १९ ॥
क्रियतां मद्वचो देवा यथा वै समुदाहृतम् ।
एतद्वः कुर्वतां श्रेयो भवेन्नैतदकुर्वताम् ॥ २० ॥

इन्द्र०—अश्विभ्यां सह सोमं वै न पास्यामि द्विजोत्तम ।
पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ॥ २१ ॥

च्यवन०—न चेत्करिष्यसि वचो मयोक्तं बलसूदन ।
मया प्रमथितः सद्यः सोमं पास्यसि वै मखे ॥ २२ ॥

भाषा

ऐसा सुन अर्जुन चुप रहे और वायु ने पुनः कहा कि हे राजन् ! च्यवन महात्मा का महान् कर्म सुनो कि ॥ १५ ॥ उन्होंने अश्विनी कुमार अर्थात् स्वर्ग के दोनों वैद्यों से यह प्रतिज्ञा किया कि मैं तुमको सोमप अर्थात् यज्ञों में देवताओं के साथ सोमलता के अभिमन्त्रित रस का पान करने वाला कर दूँगा क्योंकि वैद्य होने के कारण वे दोनों देवता सोमप न थे । और तदनन्तर इन्द्र से कहा कि आप सब देवताओं को साथ लेकर अश्विनी कुमारों को सोमप कर लीजिये ॥ १६ ॥

इन्द्र०—हे महाव्रत ! हम लोगों में ये दोनों निन्दित हैं । तथा देवताओं के तुल्य नहीं हैं, इसलिये आप ऐसा न कहिये । इन दोनों के साथ हम सोम पीना नहीं चाहते । हे विप्र ! जो अन्य काम आप कहेंगे उसमें हम आपका वचन पालन करेंगे ॥ १७ ॥ १८ ॥

च्यवन०—हे सुरेश्वर ! ये दोनों भी देवता और सूर्य के पुत्र हैं । आप के साथ ये भी सोमपान करें । हे देवगण ! इतना हमारा कहा किया जाय क्योंकि इसके करने में आप का कल्याण है और न करने में नहीं ॥ १९ ॥ २० ॥

इन्द्र०—हे द्विजोत्तम ! मैं तो इन दोनों के साथ सोम न पीऊँगा और अन्य देवता चाहे पीवें परन्तु मैं नहीं पी सकता ॥ २१ ॥

च्यवन०—हे बलसूदन यदि आप मेरा कहा न करेंगे तो आप को थोड़े ही दिनों में दुर्दशा के साथ यज्ञ में इनके साथ सोम पीना पड़ेगा ॥ २२ ॥

वायु०—ततः कर्म समारब्धं हिताय सहसाश्विनोः ।
च्यवनेन ततो मन्त्रैरभिभूताः सुराऽभवन् ॥ २३ ॥

तत्तु कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः ।
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ॥ २४ ॥

तथा वज्रेण भगवानमर्षाकुललोचनः ।
तमापतन्तं दृष्ट्वैव च्यवनस्तपसान्वितः ॥ २५ ॥

अद्भिः सिक्त्वास्तम्भयत्तं सवज्रं सहपर्वतम् ।
अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव हि ॥ २६ ॥

मदं नामाहुतिमयं व्यादितास्यं महामुनिः ।
तस्य दन्तसहस्रन्तु बभूव शतयोजनम् ॥ २७ ॥

द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः ।
हनुस्तस्याऽऽविशद्भूमावेका चास्याविशद्दिवम् ॥ २८ ॥

जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः ।
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ॥ २९ ॥

ते संमन्त्र्य ततो देवा मदस्यास्यसमीपगाः ।
अब्रुवन् सहिताः शक्रं प्रणमास्मै द्विजातये ॥ ३० ॥

अश्विभ्याम् सह सोमञ्च पिबामो विगतज्वराः ।
ततः स प्रणतः शक्रश्चकार च्यवनस्य तत् ॥ ३१ ॥

भाषा

वायु०—ऐसा कहकर च्यवन महर्षि ब्राह्मण ने अश्विनीकुमारों के हित के लिये यज्ञ को आरम्भ ही तो कर दिया और मन्त्रों के प्रताप से देवताओं को अपने वश में न रहने दिया ॥ २३ ॥

उस यज्ञ को आरम्भ होता हुआ देख क्रोध से मूर्च्छित होकर एक हाथ में वज्र और दूसरे हाथ से पर्वत लेकर च्यवन के ऊपर इन्द्र दौड़े। च्यवन ने उनको देख कर उन पर मन्त्र से जल का छींटा मारा जिससे पर्वत और वज्र लिये हाथों को उठाये इन्द्र चित्रलिखित ऐसे स्तम्भित हो गये। अनन्तर मन्त्रपूर्वक अग्नि में आहुति देकर महा भयानक और मुख बाये हुए 'मद' नामक इन्द्र के शत्रु को महामुनि ने उत्पन्न कर दिया जिसके मुख में चार २ सौ क्रोश के सहस्र दन्त थे और चौभड़ आठ २ सौ कोश की। उस मुख के नीचे का हनु पृथ्वी में था और ऊपर का हनु स्वर्गलोक का स्पर्श करता था ॥ २४—२८ ॥ और जैसे महा समुद्र में तिमि ( महामत्स्य ) के मुख में क्षुद्र मत्स्य पड़ते हैं वैसे ही उस मुख के जिह्वामूल में इन्द्रसहित सब देवता पड़ गये ॥ २९ ॥

तदनन्तर सब देवताओं ने इन्द्र से कहा कि आप इस ब्राह्मण को प्रणाम कीजिये और हम हर्ष-पूर्वक अश्विनीकुमारों के साथ सोम को पीवेंगे। तत्पश्चात् इन्द्र ने वैसा ही किया ॥३०॥३१॥ तदनन्तर

च्यवनः कृतवानेतावश्विनौ सोमपायिनौ।
ततः प्रत्याहरत् कर्म मदश्च व्यभजन्मुनिः ॥ ३२ ॥
अक्षेषु मृगयायाश्च पाने स्त्रीषु च वीर्यवान्।
एतैर्दोषैर्नरा राजन् क्षयं यान्ति न संशयः ॥ ३३ ॥
तस्मादेतान्नरो नित्यं दूरतः परिवर्जयेत्।
एतत्ते च्यवनस्यापि कर्म राजन् प्रकीर्तितम् ॥ ३४ ॥
ब्रवीम्यहं ब्रूहि वा त्वं क्षत्रियं ब्राह्मणाद्वरम् ॥ ३५ ॥

अनु० १५७, भीष्म०—तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत् पुनः।
शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप ॥ १ ॥
मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः।
तदैव च्यवनेनेह हृता तेषां वसुन्धरा ॥ २ ॥
उभौ लोकौ हृतौ मत्वा ते देवा दुःखिता भृशम्।
शोकार्त्ताश्च महात्मानं ब्रह्माणं शरणं ययुः ॥ ३ ॥

देवा०—मदास्यव्यतिषिक्तानामस्माकं लोकपूजित।
च्यवनेन हृता भूमिः कपैश्चैव दिवं प्रभो ॥ ४ ॥

ब्रह्मो०—गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः।
प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा ॥ ५ ॥

भाषा

अश्विनीकुमारों को सोमप बनाकर उस यज्ञ को महामुनि ने समाप्त किया और मद के अंशों को भी द्यूत, मृगया, मद्यपान और स्त्रियों में विभाग कर दिया क्योंकि इसमें कुछ सन्देह नहीं है कि इन दोषों से मनुष्यों का नाश होता है। इसलिये मनुष्यों को चाहिये कि दूर ही से इन दोनों का परिहार करें ॥ ३२—३४ ॥ हे राजन्! च्यवन महर्षि का भी यह कर्म मैंने तुमसे कह दिया और पुनः कहता हूँ अथवा तुम ब्राह्मण से श्रेष्ठ किसी क्षत्रिय को कहो ॥ ३५ ॥

अ० १५७, भीष्म०—यह सुनकर अर्जुन चुप रहे और वायु ने पुनः कहा कि हे जनाधिप! ब्राह्मणों ही का मुख्य कर्म सुनो कि ॥ १ ॥ जिस समय इन्द्रसहित देवता पूर्वोक्त मद के मुख में पड़ गये थे उसी समय च्यवन महर्षि ने देवताओं के दोनों लोक अर्थात् भूलोक और स्वर्गलोक के राज्य को हरण कर लिया और (कप) नामक दैत्यों ने इन लोकों को अपने वश में कर लिया ॥ २ ॥ मद के मुख से बचने के अनन्तर देवताओं ने इस कर्म को देखा और शोकयुक्त हो श्री ब्रह्मदेव की शरण में गये ॥ ३ ॥

देवता०—हे लोकपूज्य! मद के मुख में पड़े हुये हम लोगों के दोनों लोकों को च्यवन ने हरण कर लिया और उन लोकों को कपों ने अपने वश कर लिया ॥ ४ ॥

ब्रह्म०—हे इन्द्रसहित देव! तुम तुरित ही ब्राह्मणों की शरण में जाव, उनको प्रसन्न कर पुनः अपने लोकों को पाओगे ॥ ५ ॥ तत्पश्चात् वे देवता ब्राह्मणों के शरण गये और उनको प्रसन्न कर

ते ययुः शरणं विप्रानूचुस्ते कान् जयामहे।
इत्युक्तास्ते द्विजान् प्राहुर्जयतेह कपानिति ॥ ६ ॥
भूगतान् हि विजेतारो वयमित्यब्रुवन् द्विजाः।
ततः कर्म समारब्धं ब्राह्मणैः कपनाशनम्।
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनीकपैः ॥ ७ ॥
भूगतान् ब्राह्मणानाह धनीकपवचो यथा।
भवद्भिः सदृशाः सर्वे कपाः किमिह वर्तते ॥ ८ ॥
सर्वे वेदविदः प्राज्ञाः सर्वे च क्रतुयाजिनः।
सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः ॥ ९ ॥
श्रीश्चैव रमते तेषु धारयन्ति श्रियश्च ते।
वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते ॥ १० ॥
दीप्तमग्निं जुह्वते च गुरूणां वचने स्थिताः।
सर्वे च नियतात्मानो बालानां संविभागिनः ॥ ११ ॥
उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलाम्।
स्वर्गतिश्चैव गच्छन्ति तथैव शुभकर्मिणः ॥ १२ ॥
अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु।
पूर्वाह्णेषु न दीप्यन्ति दिवा चैव न शेरते ॥ १३ ॥
एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान् कथं कपान्।
विजेष्यथ निवर्तध्वं निवृत्तानां शुभं हि वः ॥ १४ ॥

भाषा

पूछा कि हम किनको विजय करें ? ब्राह्मणों ने कहा कि स्वर्गलोक के कपों को तुम विजय करो और भूलोक के कपों को हम विजय करेंगे और ऐसा कह कपों के नाश के लिये ब्राह्मणों ने यज्ञ प्रारम्भ किया ॥ ६ ॥ ७ ॥

इस समाचार को सुन कपों ने धनी नामक दूत को प्रेषण किया। उसने आकर ब्राह्मणों से कहा कि ॥ ८ ॥ जैसे आप हैं वैसे ही सब कप हैं, क्योंकि वे सब वेद जानते हैं और पण्डित हैं, यज्ञ करते हैं, और सत्य ही बोलते हैं। लक्ष्मी उन पर प्रसन्न हैं और वे लक्ष्मी को धारण करते हैं। ऋतुकाल से अन्य काल में अपनी स्त्रियों के पास नहीं जाते। यज्ञ से अन्यत्र मांस नहीं खाते, अग्निहोत्र प्रतिदिन करते हैं, गुरुओं के वचन में स्थित रहते हैं, इन्द्रियों के वश में नहीं रहते और बालकों तक सबके अंशों का उचित विभाग करते हैं। रजस्वलाओं के समीप गमन नहीं करते और अपने शुभ कर्मों से स्वर्ग का फल भोग रहे हैं। गर्भिणी, वृद्ध, बाल आदि को भोजन कराये बिना अपने भोजन नहीं करते। दिन के प्रथम पहर में क्रीड़ा नहीं करते किन्तु अपना धर्म कर्म ही करते हैं। दिन को शयन नहीं करते, और ऐसे ऐसे बहुत से अन्यान्य गुण भी कपों में हैं। तब कैसे आप कपों को विजय करेंगे ? इसलिये यदि आप इस कर्म से निवृत्त हो जायँ तभी आपको सुख है ॥९—१४॥

ब्राह्मणा०—कपान् वयं विजेष्यामो ये देवास्ते वयं स्मृताः ।
तस्माद्वध्याः कपास्माकं धनिन् याहि यथाऽऽगतम् ॥ १५ ॥
धनी गत्वा कपानाह न वो विप्राः प्रियङ्कराः ।
गृहीत्वाऽस्त्राण्यतो विप्रान् कपाः सर्वे समाद्रवन् ॥ १६ ॥
समुदग्रध्वजान् दृष्ट्वा कपान् सर्वे द्विजातयः ।
व्यसृजन् ज्वलितानग्नीन् कपानां प्राणनाशनान् ॥ १७ ॥
ब्रह्मसृष्टा हव्यभुजः कपान् हत्वा सनातनाः ।
नभसीव यथाभ्राणि व्यराजन्त नराधिप ॥ १८ ॥
हत्वा वै दानवान् देवाः सर्वे सम्भूय संयुगे ।
ते नाभ्यजानन् हि तदा ब्राह्मणैर्निहतान् कपान् ॥ १९ ॥
अथागम्य महातेजा नारदोऽकथयद्विभो ।
यथा हता महाभागैस्तेजसा ब्राह्मणैः कपाः ॥ २० ॥
नारदस्य वचः श्रुत्वा प्रीताः सर्वे दिवौकसः ।
प्रशशंसुर्द्विजांश्चापि ब्राह्मणांश्च यशस्विनः ॥ २१ ॥
तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः ।
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम् ॥ २२ ॥
इत्युक्तवचनं वायुमर्जुनः प्रत्युवाच ह ।
प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप ॥ २३ ॥
अर्जुन०—जीवाम्यहं ब्राह्मणार्थं सर्वथा सततं प्रभो ।
ब्रह्मण्यो ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः ॥ २४ ॥

भाषा

ब्राह्मण—हम कपों को विजय करेंगे। वे हमारे वध्य हैं क्योंकि जो देवता हैं वह हम हैं। हे धनी! तू जैसे आया चला जा ॥ १५ ॥ धनी ने जाकर कपों से कहा कि ब्राह्मण लोग तुम्हारे हितकारी नहीं हैं। तदनन्तर वे सब अस्त्रों को ले ले कर ब्राह्मणों पर दौड़े ॥ १६ ॥ उनको देख सब ब्राह्मणों ने कपों के प्राणनाश के लिये प्रज्वलित अग्नियों को उत्पन्न किया और अग्नियों ने कपों को भस्म कर दिया ॥ १७ ॥ १८ ॥ और देवताओं ने भी स्वर्गलोक के कपों को युद्ध में मारा। तदनन्तर नारद महर्षि के मुख से भूलोक के कपों के भस्म होने का समाचार सुनकर देवताओं ने ब्राह्मणों की बड़ी प्रशंसा की ॥ १९—२१ ॥

तत्पश्चात् देवताओं के तेज, वीर्य्य आदि की वृद्धि हुई जिससे उनका अमर होना तीनों लोक में प्रसिद्ध है ॥ २२ ॥

भीष्म०—हे युधिष्ठिर! ऐसा सुन वायु का पूजन कर अर्जुन ने वायु से जो कहा वह सुनो ॥ २३ ॥

अर्जुन०—हे प्रभो! सदा मेरा जीवन ब्राह्मणों ही के लिये है। मैं ब्राह्मणों का भक्त हूँ और सदा ब्राह्मणों को प्रणाम करता हूँ और मेरा यह बल लोक में बड़ी कीर्ति और यह धर्म का आचरण

दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं बलम् ।
लोके च परमा कीर्तिर्धर्मश्चाचरितो महान् ॥ २५ ॥
अहो ब्राह्मणकर्माणि मया मारुत तत्वतः ।
यथा प्रोक्तानि कात्स्र्येन श्रुतानि प्रयतेन च ॥ २६ ॥
वायु०—ब्राह्मणान् क्षात्रधर्मेण पालयस्वेन्द्रियाणि च ।
भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति ॥ २७ ॥
अध्या० १५८, युधि०—ब्राह्मणानर्चसे राजन् सततं संशितव्रतान् ।
कन्तु कर्मोदयं दृष्ट्वा तानर्चसि जनाधिप ॥ १ ॥
कां वा ब्राह्मणपूजायां दृष्ट्वा व्युष्टिं महाव्रत ।
तानर्चसि महाबाहो सर्वमेतद्वदस्व मे ॥ २ ॥
भीष्म०—एष ते केशवः सर्वमाख्यास्यति महामतिः ।
व्युष्टिं ब्राह्मणपूजायां दृष्टव्युष्टिर्महाव्रतः ॥ ३ ॥
बलं श्रोत्रे वाङ्मनःचक्षुषी च ज्ञानं तथा सविशुद्धं ममाद्य ।
देहन्यासो नातिचिरान्मतो मे न चातितूर्णं सविता प्रयाति ॥ ४ ॥
उक्ता धर्मा ये पुराणे महान्तो राजन् विप्राणां क्षत्रियाणां विशाश्च ।
तथा शूद्राणां धर्ममुपासते च शेषं कृष्णादुपशिक्षस्व पार्थ ॥ ५ ॥
अहं ह्येनं वेद्मि तत्वेन कृष्णं योऽयं हि यच्चास्य बलं पुराणम् ।
अमेयात्मा केशवः कौरवेन्द्र सोऽयं धर्मं रक्षति संशयेषु ॥ ६ ॥

भाषा

जो कुछ है वह सब भगवान् दत्तात्रेय ब्राह्मण ही के प्रसाद से है ॥ २४ ॥ २५ ॥ हे मारुत ! आपने जो आश्चर्य रूप ब्राह्मणों के कर्म को कहा उसको मैंने सावधानी से सब सुना ॥ २६ ॥

वायु०—अपने क्षत्रिय धर्म से ब्राह्मणों की और अपने इन्द्रियों की रक्षा करो । भृगुवंश से तुमको बड़ा भय है परन्तु काल पाकर वह होगा ॥ २७ ॥

अ० १५८, युधि०—हे राजन् (भीष्म) ! आपने जो अपना सुना हुआ ब्राह्मणपूजा का फल और ब्राह्मणों का महत्व कहा वह मैंने सुना । अब ब्राह्मणपूजा का अपना देखा हुआ फल कहिये ॥ १ ॥ २ ॥

भीष्म०—यह महामति केशव (कृष्ण भगवान्) ब्राह्मणपूजा का अपना देखा हुआ फल तुमसे कहेंगे क्योंकि ॥ ३ ॥ यद्यपि इस समय मेरा बल, कर्ण, वचन, नेत्र और ज्ञान शुद्ध हैं तथापि अब मैं थोड़े ही काल में इस शरीर को छोड़ना चाहता हूँ और इसी से अब मुझे यह ज्ञात होता है कि सूर्य्य की गति अब उतनी तेज नहीं है अर्थात् थोड़ा काल भी मुझे बड़ा ज्ञात होता है ॥ ४ ॥

हे राजन् ! पुराण में जो ब्राह्मण, क्षत्रिय, वैश्य और शूद्रों के बड़े २ धर्म कहे थे उनको मैंने सब कह दिया । अब अवशिष्ट धर्मों को तुम कृष्ण से सीखो ॥ ५ ॥ क्योंकि मैं इन कृष्ण को तत्व से जानता हूँ कि जो यह हैं और जो इनका सनातन बल है । हे कौरवेन्द्र ! यह केशव

कृष्णः पृथ्वीमसृजत् खं दिवञ्च कृष्णस्य देहान्मेदिनी सम्बभूव ।
वराहोऽयं भीमबलः पुराणः स पर्वतान् व्यसृजद्वै दिशश्च ॥ ७ ॥

अ० १५९, युधि०—ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन ।
वेत्ता त्वमस्य चार्थस्य वेद त्वां हि पितामहः ॥ १ ॥

वासुदेव०—शृणुष्वावहितो राजन् द्विजानां भरतर्षभ ।
यथा तत्त्वेन वदतो गुणान् वै कुरुसत्तम ॥ २ ॥
द्वारवत्यां समासीनं पुरा मां कुरुनन्दन ।
प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः ॥ ३ ॥
किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन ।
ईश्वरत्वं कुतस्तेषामिहैव च परत्र च ॥ ४ ॥
सदा द्विजातीन् संपूज्य किं फलं तत्र मानद ।
एतद्ब्रूहि स्फुटं सर्वं सुमहान् संशयोऽत्र मे ॥ ५ ॥
इत्युक्ते वचने तस्मिन् प्रद्युम्नेन तथा त्वहम् ।
प्रत्यब्रुवं महाराज यत्तच्छृणु समाहितः ॥ ६ ॥
व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे ।
त्रिवर्गे चापवर्गे च यशःश्रीरोगशान्तिषु ॥ ७ ॥
देवतापितृपूजासु सन्तोष्याश्चैव नो द्विजाः ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ८ ॥

भाषा

अमेय-आत्मा (जिनके किसी बात का थाह किसी को नहीं मिलता) हैं इसलिये यह तुम्हारे धर्मसंशयों को दूर करेंगे। यह कृष्ण बड़े बलवान् वराह रूपी पुराने ईश्वर हैं। इन्होंने पृथिवी, स्वर्ग, पर्वत और दिशाओं को उत्पन्न किया है ॥ ६ ॥ ७ ॥

अ० १५९, युधि०—हे मधुसूदन ! ब्राह्मणपूजा का आपने जो फल देखा है वह कहिये क्योंकि पितामह आपको तत्व से जानते हैं ॥ १ ॥

वासुदेव०—हे भरतर्षभ ! ब्राह्मणों के गुणों को मैं तत्व से कहता हूँ, आप सावधान होकर सुनिये ॥ २ ॥

एक समय द्वारका में मैं बैठा था और किसी कारण से ब्राह्मणों पर कुपित होकर मेरे ज्येष्ठ पुत्र प्रद्युम्न ने मुझसे पूछा कि ॥ ३ ॥ ब्राह्मणों की पूजा में क्या फल है ? और क्यों ब्राह्मण इस लोक और परलोक के स्वामी हैं ? तथा ब्राह्मणों का सदा पूजन करने से क्या फल होता है ? यह बड़ा संदेह हमको है, इसको स्पष्ट रूप से आप मुझसे कहिए ॥ ४ ॥ ५ ॥

इस प्रश्न का उत्तर जो मैंने दिया वह सावधान होकर आप सुनें ॥ ६ ॥

श्रीकृष्ण०—हे रुक्मिणी के पुत्र ! ब्राह्मणपूजा का फल सुनो। ये ब्राह्मण, सोमराजक (चन्द्रमा जिनके राजा हैं) दोनों लोकों के सुख और दुःख के स्वामी हैं। हे पुत्र ! इसमें मुझको

अस्मिन् लोके रौक्मिणेय तथाऽमुष्मिंश्च पुत्रक ।
ब्राह्मणप्रभवं सौम्यं न मेऽत्रास्ति विचारणा ॥ ९ ॥
ब्राह्मणप्रतिपूजायामायुः कीर्तिर्यशो बलम् ।
लोका लोकेश्वराश्चैव सर्वे ब्राह्मणपूजकाः ॥ १० ॥
तत्कथं वै नाद्रियेयमीश्वरोऽस्मीति पुत्रक ।
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान्प्रति ॥ ११ ॥
ब्राह्मणा हि महद्भूतमस्मिन् लोके परत्र च ।
भस्म कुर्य्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः ॥ १२ ॥
अन्यानपि सृजेयुश्च लोकां लोकेश्वरांस्तथा ।
कथं तेषु न वर्त्तेरन् सम्यग् ज्ञानाः सुतेजसः ॥ १३ ॥
अवसन्मे गृहे तात ब्राह्मणो हरिपिङ्गलः ।
चीरवासा बिल्वदण्डी दीर्घश्मश्रुः कृशो महान् ॥ १४ ॥
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि ।
सर्वान्संचरतो लोकान् ये दिव्या ये च मानुषाः ॥ १५ ॥
इमां गाथां गायमानाश्चत्वरेषु सभासु च ।
दुर्वाससं वासयेत् को ब्राह्मणं सत्कृतं गृहे ॥ १६ ॥
रोषणः सर्वभूतानां सूक्ष्मोऽप्यपकृते कृते ।
परिभाषाश्च मे श्रुत्वा को नु दद्यात् प्रतिश्रयम् ॥ १७ ॥

भाषा

कुछ भी संदेह नहीं है कि जो कुछ कल्याणकारी पदार्थ है उसमें ब्राह्मण ही प्रधान हैं और ब्राह्मण की पूजा से आयु, कीर्ति और बल होता है। सब लोक और सब लोकपाल ब्राह्मणों के पूजक हैं ॥ ९ ॥

त्रिवर्ग ( अर्थ, धर्म, काम, ) अपवर्ग ( मोक्ष ) के कर्मों में और यश, लक्ष्मी, रोगशान्ति तथा देवता और पितर की पूजाओं में इन ब्राह्मणों को सन्तुष्ट करना हमारा कार्य है। हे पुत्र ! तब कैसे "मैं ईश्वर हूँ" इस कारण से मैं इन ब्राह्मणों का आदर न करूँ ? और तुम भी ब्राह्मणों पर कोप न करो क्योंकि ॥ १० ॥ ११ ॥ ब्राह्मण दोनों लोकों में सब प्राणियों से बड़े हैं, इनको सब प्रत्यक्ष है। ये यदि क्रोध करें तो इस पूर्ण जगत् को भस्म कर दें तथा अन्य लोकों को तथा लोकों के लोकपालों को उत्पन्न कर दें, तो बड़े २ ज्ञानी और तेजस्वी लोग कैसे न इनकी पूजा करें ? हे तात ! इस विषय में हमारे यहाँ का समाचार सुनो।

एक ब्राह्मण कुछ दिन तक हमारे गृह में रहे। वह हरे और पीले थे तथा लम्बे मनुष्यों से भी अधिक लम्बे, दुबले, बड़ी २ दाढ़ी बढ़ाये, बेल का दण्ड लिये, स्वतन्त्र होकर इस लोक और स्वर्ग लोक में जहाँ चाहते थे स्वतन्त्र विचरते थे और सब चौराहों और सभाओं में यह कहते घूमते थे कि दुर्वासा ब्राह्मण (मुझ) को अपने गृह में कौन सत्कारपूर्वक रख सकता है ? क्योंकि थोड़े से भी अपराध पर मुझको बड़ा कोप होता है। और मेरी इस परिभाषा ( नियम ) को सुन कौन

यो मां कश्चिद्वासयीत न स मां कोपयेदिति ।
यस्मान्नाद्रियते कश्चित्ततोऽहं समवासयम् ॥ १८ ॥
स संभुङ्क्ते सहस्राणां बहूनामन्नमेकदा ।
एकदा स्वल्पकं भुङ्क्ते न चैवैति पुनर्गृहान् ॥ १९ ॥
अकस्माच्च प्रहसति तथाऽकस्मात्प्ररोदिति ।
न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा ॥ २० ॥
अथ स्वावसथं गत्वा स शय्यास्तरणानि च ।
कन्याश्चालङ्कृता दग्ध्वा ततो व्यपगतः पुनः ॥ २१ ॥
अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः ।
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ॥ २२ ॥
तदैव तु मया तस्य चित्तज्ञेन गृहे जनः ।
सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचास्तथा ॥ २३ ॥
भवन्तु सत्कृतानीह पूर्वमेव प्रचोदितः ।
ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम् ॥ २४ ॥
तं भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत् ।
क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह ॥ २५ ॥
अविमृश्यैव च ततः कृतवानस्मि तत्तथा ।
तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम् ॥ २६ ॥

भाषा

मुझे स्थान दे सकता है ? जो कोई अपने गृह में मुझे वास करावै वह मुझसे कोप न करावै इति। उनकी इस बात को सुन कर कोई उनको अपने यहाँ स्थान नहीं देता था, इसलिये मैंने उनको अपने गृह में रक्खा ॥ १२—१८ ॥

उनकी यह दशा थी कि किसी समय अनेक सहस्रों मनुष्यों के भोज्य अन्नों को भोजन कर जाते थे और किसी समय बहुत अल्प ही भोजन करते थे, किसी दिन वे निकल जाते थे तो मेरे गृह आते ही न थे और कई दिन गृह ही में रातदिन बने रहते थे। अकस्मात् हँसते और अकस्मात् रोते थे और उस समय उनकी अवस्था का वृद्ध कोई, पृथिवी में नहीं था ॥ १९ ॥ २० ॥

एक समय जिस गृह में वे रहते थे उस गृह को, शय्या और आस्तरण ( बिछौना ) सहित और जो अलङ्कृत कन्यायें उनकी सेवा में रहती थीं उनको भी जलाकर आप चले गये और पुनः आकर मुझसे कहा कि हे कृष्ण ! मैं अभी उष्ण खीर खाया चाहता हूँ ॥ २१ ॥ २२ ॥ मैं उनका मन जानता था, इसी से गृह में सब प्रकार की वस्तुओं को सदा प्रस्तुत रखता था और उसी समय मैंने उष्ण खीर उनके सामने रख दिया। उन्होंने थोड़ा खाकर मुझसे कहा कि इस जूठी खीर को अभी अपने सब शरीर में लेप करो और मैंने बिना विचारे उस समय वैसाही किया। तदनन्तर तुम्हारी माता रुक्मिणी मुस्कराती हुई वहाँ खड़ी थी, उसको देख मुनि ने उसके सर्वाङ्ग में भी मुझसे उस

स ददर्श तदाभ्याशे मातरन्ते शुभाननाम् ।
तामपि स्मयमानां स पायसेनाभ्यलेपयत् ॥ २७ ॥
मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् ।
तमारुह्य रथञ्चैव निर्ययौ च गृहान्मम ॥ २८ ॥
अग्निवर्णो ज्वलन् धीमान् स द्विजो रथधुर्य्यवत् ।
प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः ॥ २९ ॥
न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा ।
तथा स राजमार्गेण महता निर्ययौ बहिः ॥ ३० ॥
तत् दृष्ट्वा महदाश्चर्य्यं दाशार्हा जातमन्यवः ।
तत्राजल्पन् मिथः केचित् समाभाष्य परस्परम् ॥ ३१ ॥
ब्राह्मणा एव जायेरन् नान्यो वर्णः कथञ्चन ।
को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह ॥ ३२ ॥
आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः ।
ब्रह्माशीविषदग्धस्य नास्ति कश्चित् चिकित्सकः ॥ ३३ ॥
तस्मिन् व्रजति दुर्द्धर्षे प्रास्खलद्रुक्मिणी पथि ।
तन्नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत् ॥ ३४ ॥
ततः परमसंक्रुद्धो रथात् प्रस्कन्ध स द्विजः ।
पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः ॥ ३५ ॥
तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् ।
तथैव पयसा दिग्धः प्रसीद भगवन्निति ॥ ३६ ॥

भाषा

जूठी खीर का लेप करवाया और तुरित ही उसको ले आकर रथ में जोत दिया और उस रथ पर चढ़ मेरे गृह से निकले ॥ २३—२८ ॥

अग्नि के समान प्रज्वलित और बुद्धिमान् उस ब्राह्मण ने तुम्हारी माता बाला रुक्मिणी को मेरे देखते घोड़े की नाईं कोड़ों से मार कर हाँका परन्तु उस समय मेरे मन में कुछ भी क्रोध न आया और वह ब्राह्मण बड़े राजमार्ग से रथ पर निकले ॥ २९ ॥ ३० ॥ इस बड़े आश्चर्य को देख मेरे भाई-बन्धु क्रोध से अन्योन्य में कहने लगे कि जब हो तब ब्राह्मण ही का जन्म हो और अन्य वर्ण का जन्म कभी न हो क्योंकि ब्राह्मण से अन्य कौन पुरुष यहाँ इस रथ पर चढ़ कर जीवन धारण कर सकता है। उग्र सर्पों का विष सबसे तीक्ष्ण होता है और उससे भी बड़ा तीक्ष्ण ब्राह्मण है क्योंकि ब्राह्मण के विष से जले हुए का कोई चिकित्सक नहीं है ॥ ३१—३३ ॥ कुछ दूर जाकर मार्ग में रुक्मिणी गिर पड़ी और श्रीमान् ब्राह्मण ने पुनः उसको कोड़े लगाया। जब इस पर भी नहीं चल सकी तो बड़ा क्रोध कर वह ब्राह्मण रथ से कूद दक्षिण दिशा की ओर बिना मार्ग ही के चरणों से दौड़े और मैं भी "भगवन्! प्रसन्न होइये" ऐसा कहते उनके पीछे दौड़ा ॥ ३४—३६ ॥

ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह ।
जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ॥ ३७ ॥
न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत ।
प्रीतोऽस्मि तव गोविन्द वृणु कामान् यथेप्सितान् ॥ ३८ ॥
प्रसन्नस्य च मे तात पश्य व्युष्टिं यथाविधि ।
यावद्देवमनुष्याणामन्ते भावो भविष्यति ॥ ३९ ॥
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति ।
यावच्च पुण्या लोकेषु त्वयि कीर्तिर्भविष्यति ॥ ४० ॥
त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे ।
सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन ॥ ४१ ॥
यत्ते भिन्नञ्च दग्धञ्च यच्च किञ्चिद्विनाशितम् ।
सर्वं तथैव द्रष्टासि विशिष्टं वा जनार्दन ॥ ४२ ॥
यावदेतत् प्रलिप्तन्ते गात्रेषु मधुसूदन ।
ततो मृत्युभयं नास्ति यावदिच्छसि चाच्युत ॥ ४३ ॥
न तु पादतले लिप्ते कस्मात्ते पुत्रकाद्य वै ।
नैतन्मे प्रियमित्येव स मां प्रीतोऽब्रवीत्तदा ।
इत्युक्तोऽहं शरीरं स्वं ददर्श श्रीसमायुतम् ॥ ४४ ॥
रुक्मिणीञ्चाब्रवीत्प्रीतः सर्वस्त्रीणां वरं यशः ।
कीर्तिञ्चानुत्तमां लोके समवाप्स्यसि शोभने ॥ ४५ ॥
न त्वां जरा वा रोगाश्च वैवर्ण्यञ्चापि भाविनि ।
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि ॥ ४६ ॥

भाषा

तदनन्तर मुझको देख उस तेजस्वी ब्राह्मण ने कहा कि हे कृष्ण ! तुमने अपने स्वभाव ही से क्रोध को जीत लिया है, इतने दिनों में मैंने तुम्हारा कोई अपराध नहीं देखा, मैं प्रसन्न हूँ, मेरी प्रसन्नता का फल देखो। तुम जो चाहो मुझसे लो।

हे जनार्दन ! जैसे अन्न में सब मनुष्यों का प्रीतिभाव होता है वैसे तुम में भी होगा और तीनों लोक में तुम सबसे बड़े और सबके प्रिय होगे तथा तुम्हारी कीर्ति सदा रहेगी ॥ ३७—४० ॥ और जो जो तुम्हारी वस्तु मैंने तोड़ दिया, जला दिया, नाश कर दिया, उन सबको तुम वैसाही और उससे भी अच्छा अपनी आँखों से देखोगे और तुम्हारे जितने शरीर में यह जूठी खीर लगी है उतने में मृत्यु का भय नहीं है। किन्तु हे पुत्र ! तुमने अपने चरणों के तलों में क्यों नहीं खीर को लगाया ? इसका खेद हमको है ॥ ४१—४४ ॥

ऐसा सुन मैंने अपने शरीर को देखा तो उसमें खीर नहीं देख पड़ी और शरीर की दुगुनी शोभा देख पड़ी। तदनन्तर प्रसन्न होकर तुम्हारी माता रुक्मिणी से कहा कि सब स्त्रियों से अधिक

षोडशानां सहस्राणां वधूनां केशवस्य ह ।
वरिष्ठा च सलोक्या च केशवस्य भविष्यसि ॥ ४७ ॥
तव मातरमित्युक्त्वा ततो मां पुनरब्रवीद् ।
प्रस्थितः स महातेजा दुर्वासाग्निरिव ज्वलन् ॥ ४८ ॥
एषैव ते बुद्धिरस्तु ब्राह्मणान् प्रति केशव ।
इत्युक्त्वा स तदा विप्रस्तत्रैवान्तरधीयत ॥ ४९ ॥
तस्मिन्नन्तर्हिते चाहमुपांशु व्रतमाचरम् ।
यत्किंचित् ब्राह्मणो ब्रूयात् सर्वं कुर्यामिति प्रभो ॥ ५० ॥
एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक ।
ततः परमहृष्टात्मा प्राविशं गृहमेव च ॥ ५१ ॥
प्रविष्टे स्वगृहे सर्वमथ पश्यामि तन्नवम् ।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक ॥ ५२ ॥
ततोऽहं विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढम् ।
अपूजयश्च मनसा रौक्मिणेय सदा द्विजान् ॥ ५३ ॥
इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ ।
माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा ॥ ५४ ॥
तथा त्वमपि कौन्तेय ब्राह्मणान् सततं प्रभो ।
पूजयस्व महाभागान् धनैर्गोभिश्च नित्यदा ॥ ५५ ॥
एवं व्युष्टिमहं प्राप्तो ब्राह्मणानां प्रसादजाम् ।
यच्च मामाह भीष्मस्तु तत् सत्यं भरतर्षभ ॥ ५६ ॥

भाषा

तुम्हारा यश होगा और हे शोभने ! भामिनि ! लोक में तुम्हारी बड़ी कीर्ति होगी और तुम्हारे शरीर में वृद्धता रोग अथवा विवर्णता कदापि नहीं स्पर्श करैंगी और उत्तम गन्धवाले अपने शरीर से तुम कृष्ण का आराधन करोगी तथा केशव के सोलह सहस्र रानियों में बड़ी और केशव के लोक जाने वाली तुम होगी इति ।

ऐसा तुम्हारी माता से कह कर अग्नि के ऐसे प्रज्वलित महा तेजस्वी दुर्वासा ने पुनः मुझ से कहा कि हे केशव ! ऐसे ही बुद्धि तुम्हारी ब्राह्मणों में बनी रहे । इतना कहकर मुनि देखते ही देखते अन्तर्हित हुए ॥ ४५—४९ ॥ तदनन्तर मैंने यह मानसिक प्रतिज्ञा किया कि जो ही ब्राह्मण कहैंगे वही मैं करूँगा और रुक्मिणी के साथ बड़ें हर्ष से गृह में आते ही उस मुनि के जलाये हुए अपने सब वस्तुओं को पूर्व से भी नवीन और दृढ़ देख मैंने बड़े आश्चर्य से अपने मन में ब्राह्मणों की पूजा की । हे भरतर्षभ ! प्रद्युम्न के पूछने पर ब्राह्मण मुख्य का जो माहात्म्य मैंने प्रद्युम्न से कहा था वह आप से कह दिया और ऐसे ही आप भी सदा वचनों और दानों से महाभाग ब्राह्मणों की सदा पूजा किया करें। मैंने ब्राह्मण के प्रसाद का फल यह पाया है, इसी से इन भीष्म ने मुझसे पूछने के लिये तुमसे कहा ॥५०—५६॥

यत्तु केचन स्वार्थान्धाः कैश्चिदाधुनिकैर्ब्राह्मणैः कदाचिद्भग्नमनोरथाः सन्तो द्वेषावेशाद्वदन्ति—भारतसङ्ग्रामानन्तरं कलिकालिकेषु ब्राह्मणेषु गुणानां ह्रासो दोषाणामुद्रेकश्च जात इति। सेयं तेषामुक्तिरेतदनुसारणी लिपिश्च तेषामेव स्वार्थान्ध्यमतितरां प्रकाशयन्ती हेयैव। तथाहि—भारतयुद्धस्य ब्राह्मणगुणह्रासकारणता न सम्भवति। तत्रैकस्य द्रोणाचार्यस्यैव ब्राह्मणस्य हतत्वात् अन्यब्राह्मणानां याथापूर्वावस्थ्यात्, प्रत्युत क्षत्रियादीनामेव ततः शरीरतद्गुणादिह्रासो वास्तविको योऽद्य यावदप्यनुवर्त्तमानोऽनुभूयते। किञ्च भारतयुद्धानन्तरमेव हि ब्राह्मणमाहात्म्यमुपवर्णितं भीष्मेण यदिहैवानन्तरमुद्धृतमस्माभिः। अथ न भारतयुद्धस्य ब्राह्मणगुणह्रासकताऽस्माभिरभिप्रेयते, किन्तु तदनन्तरकालिकस्य कलियुगप्रवेशस्यैवेत्युच्यते तदपि निःसारमेव; युगप्रभावस्य सर्ववर्णसाधारण्येन तमादाय ब्राह्मणान् प्रत्याक्षेपे "यत्रोभयो" रितिन्यायेन वर्णान्तरस्यानधिकारात्। अत एव मनुना सर्वयुगसाधारण्येन ब्राह्मणानां प्रशंसा कृता। तद्वाक्यानि तु पूर्वमिहैवोद्धृतानि। तथा आचारकाण्डे १ अध्याये भगवान् पराशरोऽपि—

भाषा

किसी आधुनिक ब्राह्मण से अपने मनोरथ को न होने वा भग्न होते देख अपने स्वार्थ के अभिनिवेश से अन्ध होकर कोई २ स्वार्थान्ध मनुष्य जो ऐसा कहते हैं कि भारतयुद्ध से इधर के ब्राह्मणों में गुणों का अति ह्रास और दोषों की अति वृद्धि हो गयी है वह उनकी वाणी उन्हीं के स्वार्थ की अन्धता को प्रकाश करती हुई त्यागने के योग्य है क्योंकि—

१—भारतयुद्ध, ब्राह्मण गुण के ह्रास का कारण नहीं हो सकता क्योंकि उसमें एक ही ब्राह्मण अर्थात् द्रोणाचार्य की मृत्यु हुई जो कि वृद्धता के कारण उसके योग्य ही थे और उसमें भी धृष्टद्युम्न को अपराध मात्र मिला न कि कोई यश।

२—उस युद्ध में अपने अपने दोष की दुर्घटना से क्षत्रिय जाति निःशेष हो गयी और उनके गुण के ह्रास को कौन कहे शरीरों का भी नाश हो गया क्योंकि उसी कारण से आज तक कोई ऐसा क्षत्रिय नहीं हुआ जैसा कि भारतयुद्ध में मारे गये थे।

प्रश्न—यदि पूर्वोक्त कथन का यह तात्पर्य लगाया जाय कि कलियुग के आदि में भारतयुद्ध हुआ और तत्पश्चात् ब्राह्मणों में गुणों का ह्रास और दोषों की वृद्धि हुई तो इस कथन में क्या दोष है?

## इस प्रश्न के दश उत्तर हैं—

उ० १—इस कथन में ये दोष हैं कि यह कथन सत्य नहीं है क्योंकि गुणों का प्रभाव सर्व वर्णों पर पड़ता है न कि एक ही वर्ण पर, तो ऐसी दशा में किसी वर्ण को ब्राह्मणों पर ऐसा आक्षेप करने का अधिकार नहीं है।

उ० २—क्षत्रिय शिरोमणि वेदोक्त महामान्य स्वायम्भुव मनु ने जब साधारण से सब युगों के लिये ब्राह्मण जाति मात्र (गुणी वा गुणहीन वा दुष्ट) को उत्तमोत्तम ही वर्णन किया है तथा दश वर्ष के बालक के ब्राह्मण को भी शत वर्ष के वृद्ध क्षत्रिय का पिता कहा है—जैसा कि अनेक श्लोक इसी प्रकरण में पूर्व ही उद्धृत हो चुके हैं तो आधुनिक कीट पतङ्ग के तुल्य मनुष्य की उक्त वाणी उन श्लोकों के विरुद्ध होकर कैसे सच्ची हो सकती है?

युगे युगे तु ये धर्मास्तत्र तत्र च ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥
( परा० स्मृ० अ० १ श्लो० ३३ )

अत्र माधवः—इदानीं युगसामर्थ्यवर्णनस्य प्रयोजनमाह—युगे युग इति । अपि च, आधुनिका दुःशीला अपि विप्राः सुशीलेभ्योऽपि शूद्रादिभ्यः श्रेष्ठा एव । तथा च स एव ८ अध्याये—

"दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेत् शीलवतीं खरीम् ॥

अत्र माधवः—ननु यस्मिन् ग्रामे जितेन्द्रियः शास्त्रोक्तस्वधर्मवर्ती शूद्रो विद्यते तत्र पञ्चेन्द्रियरताद् दुःशीलाद्विप्राद्वरं तस्यैव शूद्रस्य परिषत्वमित्यत आह—दुःशीलोऽपीति । 'कः परित्यज्ये'ति दृष्टान्तः । जातिशीलयोर्मध्ये जातिरेव प्राधान्येनोपादेया शीलन्तु यथा सम्भवम् इति ।

किञ्च—वर्षोपवर्षपाणिनिकात्यायनपतञ्जलयोऽप्याधुनिका एव ब्रह्मर्षयो विप्राः न तु भारतयुद्धात्प्राचीनाः तथा भट्टपादभगवत्पादसुरेश्वरपद्मपादविद्यारण्यमाध्वरामानुजवल्लभादय आचार्या भारतयुद्धादतिनवीना विप्रा एव । एवं चाणक्यशबरवराहप्रभाकरमुरारिबाणमयूराभिनवगुप्तकय्यटमम्मटवाचस्पत्युदयनश्रीहर्षगङ्गेश्वरादयः सहस्रशो देवदर्शनाः पण्डितरूपा आधुनिका विप्रा एव । तत्र शबरः पूर्वमीमांसादर्शनभाष्यकारः, प्रभाकरो मुरारिश्च तद्वार्तिककारौ, वराहः संहितादिकारो देववित्प्रवरः, बाणः कादम्बरीहर्षचरितकारः, मयूरः सूर्यशतककारः ।

भाषा

उ० ३—पाराशर स्मृति के आचार काण्ड में यह वाक्य है "युगे युगे तु०" जिस २ युग के जो २ स्वभाव हैं तथा जो २ ब्राह्मण हैं उनकी निन्दा पूर्व युग की अपेक्षा से नहीं करनी चाहिये क्योंकि वे ब्राह्मण स्वतन्त्र न होकर युगों के अधीन होते हैं ।

उ० ४—यदि थोड़े काल के लिये उक्त अन्ध वाणी मान भी ली जाय तो आधुनिक ब्राह्मणों पर किसी अन्य वर्ण का आक्षेप नहीं हो सकता क्योंकि उक्त काण्ड ही में पराशर महर्षि ने यह कहा है कि "दुःशीलोऽपि" ब्राह्मण यदि दुःशील भी हो तो वह पूज्य ही है और शूद्र जितेन्द्रिय भी हो तो वह पूज्य नहीं है, क्योंकि कौन ऐसा होगा कि जो दुष्टा गौ को छोड़ सूधी गर्दभी को दूहैगा इति । इस वाक्य का तात्पर्य यह है कि वास्तविक में गुणों की अपेक्षा जाति का उत्कर्ष अधिक होता है ।

उ० ५—वर्ष, उपवर्ष, पाणिनि, कात्यायन, पतञ्जलि ये महर्षि भी भारतयुद्ध के पश्चात् ही के ब्राह्मण हैं जिनका माहात्म्य सूर्यवत् प्रसिद्ध है ।

उ० ६—भट्टपाद (कुमारिल स्वामी) भगवत्पाद (श्री शंकराचार्य) सुरेश्वर पद्मपाद विद्यारण्य, माध्व, रामानुज, बल्लभ आदि आचार्य भी भारतयुद्ध के पश्चात् के ब्राह्मण हैं जिनके तुल्य अन्य वर्ण का मनुष्य आज तक कोई नहीं हुआ और न कलियुग पर्य्यन्त आगे भी होने की सम्भावना ही है ।

उ० ७—चाणक्य, शबर, वराह, प्रभाकर, मुरारि मिश्र, बाण, मयूर, अभिनवगुप्त कय्यट, मम्मट, वाचसपति, उदयन, श्रीहर्ष, गङ्गेश्वर आदि सहस्रों विद्वान् बड़े २ देवदृष्टि पण्डित थोड़े दिन हुये कि हो चुके हैं, जिनकी ग्रन्थादि रूपी कीर्ति आँख वालों के लिये सूर्यवत् उपकार करती चमक

तथा च काव्यप्रकाशे द्वितीयसूत्रे 'काव्यं शिवेतरक्षतये' इति वाक्यस्य व्याख्यायाम्-'आदित्यादेर्मयूरादीनामिवानर्थनिवारणम्' इत्यत्र आदित्यादेरिति प्रतीकमादाय बालसुबोधिन्याम् १० पत्रे—

मयूरकवेः कुष्ठरोगप्राप्तौ कारणं तु भट्टयज्ञेश्वरकृतायां सूर्यशतकटीकायामभिहितम् तथाहि—पुरा किल श्रीविक्रमार्कसमयादष्टसप्तत्युत्तरसहस्रसम्मितेषु १०७८ सम्वत्सरेषु व्यतीतेषु सम्प्राप्तोदयस्य श्रीमद्भोजराजस्य सभासद्मरत्नदीपो महाकविर्मयूरो धारानगरीमधिवसति स्म। तस्य च भगिनीपतिः, कादम्बरीगद्यप्रबन्धनिर्माता बाणकविः परममित्रमासीत्। अथ कदाचिन्मयूरकविर्निशः प्रान्ते सम्प्राप्तप्रबोधः कतिचित्पद्यानि कवयाञ्चक्रे। तानि चातीव सरसरमणीयान्याकलय्य तदानीमेवोत्कटसमुत्कण्ठावशान्निजसुहृदे बाणकवये निवेदयितुमनास्तदावासभवनमभिजगाम। तत्र च बाणकविर्निजवल्लभां मयूरस्वसारं मानकलुषितां प्रसादयंस्तत्कालकल्पितं "गतप्राया रात्रिः कृशतनु शशी शीर्यत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव। प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो" इति पादोनं पद्यं पठित्वा चरमचरणसङ्गतिं कल्पयंस्तावदेव पापठ्यांचक्रे। अत्रावसरे घनस्तनितस्येव गम्भीरस्य बाणकविभाषणस्य श्रवणेन विवशान्तःकरणो मयूरकविः स्वप्रतिभाप्रवाहं निरोद्धुमक्षमस्तत्पद्येऽपेक्षितं सुसङ्गतं चतुर्थचरणं "कुचप्रत्यासत्या हृदयमपि ते चण्डि कठिनम्" इत्येवं रूपं केकानिनाद-

भाषा

रही है और ये सब ब्राह्मण ही थे जिनके समान अन्य वर्ण के किसी मनुष्य का नाम भी नहीं लिया जा सकता, तथा अन्यान्य सब वर्ण इनके चरणों को चूमते ही आये हैं। चाणक्य की नीति, बुद्धि और प्रताप जगत्प्रसिद्ध है। शबर स्वामी मीमांसादर्शन के भाष्यकार थे। प्रभाकर गुरु और मुरारि मिश्र उसके वार्तिककार हैं। वराहने वाराहीसंहिता आदि ज्योतिष शास्त्र के ग्रन्थों को बनाया है। बाण ने कादम्बरी और हर्षचरित्र बनाया। मयूर के सूर्यशतक से उनका पाण्डित्य प्रसिद्ध है। तथा काव्यप्रकाश के प्रथम उल्लास में "*काव्यं शिवेतरक्षतये*" इस वाक्य की व्याख्या में "*आदित्यादेर्मयूरादीनामिवानर्थनिवारणम्*" अनर्थ का निवारण भी काव्य का फल है। जैसे कि सूर्य आदि से मयूर आदि का इस वाक्य को लेकर काव्यप्रकाश की बालबोधनी नामक टीका में सूर्य्यशतक की टीका का भाग उद्धृत है कि संवत् १०७८ के अनन्तर श्री भोजराज की सभा के रत्नप्रदीप रूपी महाकवि मयूर धारा नगरी में रहते थे और कादम्बरी गद्यग्रन्थ के कर्त्ता बाण कवि उनके भगिनीपति और मित्र थे। एक समय रात्रि के अन्तिम प्रहर में मयूर कवि ने कई पद्यों की रचना की और उन पद्यों की रमणीयता को देख हर्ष से बहुत ही उत्सुक हो बाण कवि को सुनाने के लिये उसी समय उनके गृह पर चले गये। संयोग से उस समय बाण कवि अपनी प्रिया अर्थात् मयूर की भगिनी को मनाने के लिये तत्क्षण रचना कर गृह के भीतर ही से एक श्लोक के "*गतप्राया रात्रिः कृशतनु शशी शीर्यत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव। प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो*" हे कृशतनु, रात्रि बीती सी हो गई, चन्द्रमा विथड़े से हो रहे हैं, यह दीपक भी मानो निद्रा के वश होकर झपकी ले रहा है, मान (बनावटी कोप) प्रणाम ही तक रहता है आश्चर्य्य है कि इस पर भी तुम कोप को नहीं छोड़ती हो।

मिव मन्द्रमधुरस्वरेणोदीरयामास। तच्छ्रुत्वा सज्जधनुपस्तूर्णं बाणो लक्ष्यमिवायमपि बाणकविर्निजनाम्नोऽन्वर्थता समर्थनाय (इव) लीलासद्मनो झटिति विनिर्गत्य प्राणाधिकं प्रियं सुहृद्वरं मयूरकविं समाजगाम। ततोऽस्या बाणवनिताया रसभङ्गजनितमनःक्षोभवत्याः पातिव्रत्यप्रभावेणाचिरादेव शापतः स मयूरकविः कुष्ठरोगकवलितसर्वाङ्गः संवृत्तः। अथास्य पापरोगस्य समूलमुन्मूलनाय शतसंख्याकहृद्यतमपद्यघटितकाव्यबन्धेन भगवन्तं भास्करदेवं स्तुत्वा तत्प्रसादमहिम्ना प्रनष्टपापरोगः कनकरुचिरगात्रोऽयं मयूरकविः संबभूवेत्येवं तात्पर्यक इतिहासो मेरुतुङ्गाचार्यकृतप्रबन्धचिन्तामण्यादिग्रन्थे स्थितः" इति॥

अस्यामेव च ब्राह्मण्यामूढायामुत्पन्नाः वत्सगोत्रा मिश्रोपनामानः पयास्यादिग्रामवास्तव्या ब्राह्मणवराः सरयूपारदेशेऽद्य यावदपि प्रसिद्धाः। विश्वसेनोपाह्वक्षत्रियकन्यायां चोढायामस्मादेव प्रसूतात् मध्यमस्त्री नरपतिप्रभृतयो मातृजातीयाः क्षत्रियवरास्तत्रैव प्रतिवसन्ति येभ्योऽन्ये विश्वसेनाः स्पृहयन्ति तद्भवितुम्। एवमभिनवगुप्तो भरतसूत्रभाष्येश्वरप्रत्यभिज्ञाद्यनेकग्रन्थकारः। कय्यटो महाभाष्यप्रदीपकारः, मम्मटः काव्यप्रकाशकारः, वाचस्पतिर्भामत्याद्यनेकनिबन्धकारः, उदयनो न्यायाचार्यो बौद्धधिक्कारन्यायकुसुमाञ्जलिकिरणावलीतात्पर्यपरिशुद्ध्यादिकारः, गङ्गेशो न्यायतत्वचिन्तामणिकारः। एवमन्येऽपि प्रसिद्धाः विस्तरभयान्नोदाह्रियन्ते।

भाषा

इन तीन चरणों को पढ़कर चतुर्थ चरण की कल्पना के लिये विचार करते थे, इतने में मयूर ने बाहर से सुनकर *"कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनं"* (हे चण्डि कोपयुक्ते कुचों के साथ सटने से तुम्हारा हृदय भी कठिन है अर्थात् कुचों की कठिनता उनके साथ सटने से तुम्हारे हृदय में भी आ गई है) इस चतुर्थ चरण को बोल दिया। इसको सुन अपने पत्नी को छोड़ बाण कवि अपने प्राण प्रिय मयूर कवि के समीप बाहर चले आये। और बाण की पतिव्रता स्त्री ने अपने काम दुःख के कारण मयूर कवि को शाप दे दिया जिससे कि मयूर के सर्वाङ्ग में कुष्ठ रोग हो गया और जब वह किसी चिकित्सा से शान्त नहीं हुआ तब मयूर कवि सूर्य्य भगवान की सौ श्लोकों से स्तुति कर उसी के प्रभाव से नीरोग हो गये। यह इतिहास मेरुतुङ्गाचार्यकृत प्रबन्ध चिन्तामणि नामक ग्रन्थ में स्थित है इति। और इसी मयूर कवि से विवाहिता ब्राह्मण कन्या में उत्पन्न वत्स गोत्र वाले मिश्र उपाधि के सहस्रों ब्राह्मण सरुआर देश में आज भी प्रसिद्ध हैं। तथा अपनी विवाहिता विश्वसेन उपाधि के क्षत्रिय की कन्या में मयूर ने जिनको उत्पन्न किया उनके वंश में मझौली के राजा आदि अनेक विश्वसेन क्षत्रिय आज भी सरुआर में प्रतिष्ठित और प्रसिद्ध हैं। जिनमें अपनी गणना के लिये अन्य विश्वसेन लोग बहुत चाहते और उद्योग तथा व्यय भी करते हैं। ऐसे ही अभिनवगुप्त भरतसूत्र-भाष्य और ईश्वरप्रत्यभिज्ञा आदि अनेक ग्रन्थों के कर्त्ता थे। कय्यट व्याकरण महाभाष्य के प्रदीप नामक टीका के कर्त्ता थे। उदयन न्यायाचार्य्य थे। उन्होंने बौद्धधिक्कार न्यायकुसुमाञ्जलि किरणावली आदि अनेक ग्रन्थों को बनाया। श्रीहर्ष मिश्र ने लोकविख्यात खण्डनखण्डखाद्य, नैषधकाव्य आदि अनेक ग्रन्थों को बनाया।

किञ्च अनेकशः क्षत्रवंशो विच्छिन्नोऽपि वसिष्ठभरद्वाजद्वैपायनादिभिर्ब्राह्मणैरेव पुनः प्रवर्तितः इतीतिहासपुराणदर्शिनामपरोक्षमेव। दिङ्मात्रं तूदाह्रियते—

आदि० अ० १-४—जामदग्न्येन रामेण पितुर्वधममृष्यता।
भीष्म उ०—राजा परशुना पूर्वं हैहयाधिपतिर्हतः॥ १॥
शतानि दश बाहूनां निकृत्तान्यर्जुनस्य वै।
लोकस्याचरितो धर्मस्तेनाति किल दुश्चरः॥ २॥
पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता।
निर्दग्धं क्षत्रमसकृद्रथेन जयता महीम्॥ ३॥
एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा॥ ४॥
एवं निःक्षत्रिये लोके कृते तेन महर्षिणा।
उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः॥ ५॥
पाणिग्राहस्य तनय इति वेदेषु निश्चितम्।
धर्मं मनसि संस्थाप्य ब्राह्मणाँस्ताः समभ्ययुः॥ ६॥
लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः।
ततः पुनः समुदितं क्षत्रं समभवत्तदा॥ ७॥ इति॥

भाषा

गङ्गेश ने न्यायतत्त्व चिन्तामणि को बनाया जो आज भी प्रसिद्ध है। ऐसे ही बहुत से अन्यान्य उत्तमोत्तम पण्डित ब्राह्मण और उनके ग्रन्थ भी प्रसिद्ध हैं जिनको मैं यहाँ विस्तरभय से नहीं कहता हूँ।

उ० ८—यद्यपि इतिहास और पुराण के देखने वालों से यह बात गुप्त नहीं है कि प्राचीन समय में जब जब क्षत्रिय वंश का विच्छेद होने लगा तब तब वसिष्ठ, भरद्वाज, द्वैपायन आदि ब्राह्मणों ही ने क्षत्रिय वंश को चलाया। जिन ब्राह्मणों के वंश में आधुनिक ब्राह्मण भी हैं। तथापि एक छोटा सा उदाहरण इसका यह है कि—

'भीष्म उ०'—(जामदग्न्येन०) भीष्म ने अपनी विमाता सत्यवती से कहा कि पूर्व समय में अपने पिता (जमदग्नि) के बध को क्षमा न कर उनके पुत्र राम ने परशु से हैहयाधिपति (सहस्रबाहु कार्तवीर्य अर्जुन) को उनके सहस्रबाहुओं को काट कर मार डाला। यह उनका किया धर्म दूसरे के लिये बड़ा दुष्कर है॥ १॥ २॥ पुनः धनु लेकर महास्त्रों का प्रयोग के द्वारा एक रथ से पृथिवी को विजय करते २ परशुराम ने क्षत्रियों का अनेक वार संहार किया। इस प्रकार से पूर्व समय में महात्मा भार्गव (परशुराम) के हाथ से पृथिवी इक्कीस वार क्षत्रियों से शून्य की गयी॥ ३॥ ४॥

इस रीति से जब परशुराम महर्षि ने इस लोक को क्षत्रियों से शून्य कर दिया तब क्षत्रिय स्त्रियाँ वेदों में निश्चय किये हुये धर्म को कि "अपने पति से अन्य का उत्पन्न किया हुआ अपत्य (लड़का वा लड़की) स्त्री के पाणिग्राही पति ही का अपत्य होता है" हृदय में स्थापन कर ब्राह्मणों के समीप गईं और वेदपारग ब्राह्मणों ने (आपत्काल के धर्मानुसार) उन क्षत्रियाओं में अपत्य उत्पन्न किया। और क्षत्रीस्त्रियों का यही धर्माचार वेद में तो स्थित है परन्तु उक्त प्रकार से लोक में भी देखा गया। तदनन्तर कुछ समय के पश्चात् पृथिवी में पुनः क्षत्रियों का बहुत्व हो गया॥५—७॥

अन्यच्चाद्यापि हि क्षत्रियराज्ये नेपालमण्डले ब्राह्मणपरिणीतानां क्षत्रियाणामपत्यानि क्षत्रियेषूत्तमतया गण्यन्ते ।

अपि च किं बहुना यावता 'सैषा क्षत्रस्य योनिर्यद्ब्रह्म' इति श्रुत्यैव ब्राह्मणानां क्षत्रिययोनिता स्फुटतरमुटङ्क्यते ।

यदा चैवं तदा कैव कथा वैश्यशूद्रादीनां तत्रापि च क्षत्रसाम्राज्योच्छेदेन स्वधर्माद्विचलितानां वाचालितानाञ्चाधुनिकानां तेषामित्यपक्षपातिनः कृतबुद्धय एव विदां कुर्वन्तु ।

## ३४—अथ पितृश्राद्धम्, तदेव जलेन चेत् तर्पणम्

अत्राचाराध्याये याज्ञवल्क्यः—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ २६८ ॥
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ २६९ ॥ इति ॥

भाषा

उ० ९—क्षत्रिय राज्य नैपाल मण्डल में ब्राह्मणों की अपनी २ विवाहिता क्षत्रिय कन्याओं में जो अपत्य उत्पन्न होते हैं वे आज दिन भी उत्तम क्षत्रिय गिने जाते हैं ।

उ० १०—इस विषय में अधिक क्या वक्तव्य है जब कि बृहदारण्यक उपनिषद् अ० ३ ब्रा० ४ वा ११ में यह कहा है कि "*सैषा क्षत्रस्य योनिर्यद्ब्रह्म*" ( यह ब्राह्मण जो है सो क्षत्रिय का कारण है अर्थात् जिसके बाहु से क्षत्रिय उत्पन्न होता है वह ब्रह्मदेव ब्राह्मण हैं ) ।

'म० भा० आदिपर्व' जब कि क्षत्रियों से भी अधिक अर्थात् उनके पिता के तुल्य वास्तविक में ब्राह्मणों की यह इतनी बड़ी प्रतिष्ठा है जो कि इस प्रकरण में आरंभ से यहाँ तक भली भाँति दर्शायी गई तो अब पक्षपातशून्य बुद्धिमान् महाशय स्वयं यह समझ सकते हैं कि अपने सर्वोत्तम पिता का निन्दक पुत्र कैसा सुयोग्य गिना जाता है । और वैश्य शूद्र आदिकों की तो कथा ही क्या है, तथा उनमें भी क्षत्रिय साम्राज्य के उच्छेद के कारण ७–८ सौ वर्ष से आर्यावर्त में जो वैश्य आदि वर्णों के कतिपय मनुष्य शास्त्र पढ़ने के बिना ही वकवादी और धर्मोपदेशक आप से आप बन बैठे हैं, उन आधुनिकों की तो चर्चा भी नहीं करने के योग्य है । इसलिये यह ब्राह्मणपूजन का प्रकरण अब समाप्त किया जाता है ।

## ३४—पितरों के श्राद्ध और तर्पण का निरूपण

श्राद्ध का स्वरूप मनु, पैठीनसि और याज्ञवल्क्य इन तीन महाशयों ने कहा है जो स्पष्टता के लिये व्युतक्रम से अर्थात् प्रथम याज्ञवल्क्य महर्षि के, तदनन्तर मनु के, तत्पश्चात् पैठीनसि महर्षि के वाक्य का उपन्यास यहाँ किया जाता है ।

'वसुरुद्रा०' इस वाक्य से पूर्व याज्ञवल्क्य स्मृति में यह कहा है कि "श्राद्ध से तृप्त होकर पिता आदि श्राद्धकर्ता को स्वर्गादि फल देते हैं ।" उस पर यह आक्षेप होता है कि जब पिता आदि अपने लिये भी स्वर्गादि फल पाने में कुछ भी स्वतन्त्र नहीं हैं, किन्तु अपने प्रारब्ध कर्मों के अधीन हैं, तब वे दूसरों को कैसे स्वर्गादि फल दे सकते हैं ? इसके समाधान में ये दोनों श्लोक हैं । इससे इन

अत्र मिताक्षरा—सम्भवेऽपि स्वयमात्मनोऽप्यनीशाः कथं स्वर्गादिफलं प्रयच्छन्तीत्यत आह 'वस्विति'। न ह्यत्र देवदत्तादय एव श्राद्धकर्मणि सम्प्रदानभूताः पित्रादिशब्दैरुच्यन्ते, किन्त्वधिष्ठातृवस्वादिदेवतासहिता एव। यथा देवदत्तादिशब्दैर्न शरीरमात्रं नाप्यात्ममात्रं किन्तु शरीरविशिष्टा आत्मान उच्यन्ते। एवमधिष्ठातृदेवतासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते। अधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्तास्सन्तस्तानपि देवदत्तादींस्तर्पयन्ति। कर्तृंश्च पुत्रादीन् फलेन संयोजयन्ति। यथा माता गर्भपोषणायान्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमप्यपत्यं तर्पयति, दोहदान्नप्रदायिनश्च प्रत्युपकारफलेन संयोजयति, तद्वद्वसवो रुद्रा अदितिसुताः आदित्या एते पितरः पितृपितामहप्रपितामहशब्दवाच्या न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि सम्प्रदानभूताः किन्तु मनुष्याणां पितॄन् देवदत्तादीन् स्वयं श्राद्धेन तर्पितास्तर्पयन्ति अपि तु श्राद्धकारिभ्यः आयुः 'प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः' चकारात्तत्र तत्र शास्त्रोक्तमन्यदपि फलं स्वयं प्रीताः पितामहा वस्वादयः प्रयच्छन्ति इति।

मनुरपि अ० ३—वसून्वदन्ति तु पितॄन् रुद्रांश्चैव पितामहान्।
प्रपितामहांस्तथादित्याञ्छ्रुतिरेषा सनातनी ॥२८४॥

भाषा

श्लोकों का भावार्थ ही प्रथम कहा जाता है, जिससे उक्त आक्षेप का उत्तर हो जाय।

'वसुरुद्रा' यदि श्राद्ध कर्म में जिनके लिये अन्न वस्त्रादि दिये जाते हैं, वे अर्थात् श्राद्धकर्ता के लोक प्रसिद्ध पिता, पितामह, प्रपितामह, देवदत्त, यज्ञदत्त, विष्णुमित्रादि मरे मनुष्यों के आत्मा ही केवल श्राद्ध मन्त्रों में पिता, पितामह, प्रपितामह शब्द के अर्थ होते "जैसा कि सामान्य मनुष्य आस्तिक वा नास्तिक समझते हैं" तब उक्त आक्षेप ठीक ही था, परन्तु ऐसा नहीं है, किन्तु (जैसे) देवदत्त आदि शब्द का केवल शरीर अर्थ नहीं है क्योंकि यह कहा जाता है कि देवदत्त तो चले गये। उनका मृतक शरीर मात्र पड़ा है, तथा केवल आत्मा मात्र भी देवदत्त आदि शब्द का अर्थ नहीं है, क्योंकि यदि ऐसा हो तो "देवदत्त खाते हैं और नहाते हैं" इत्यादि व्यवहार न हो सकेगा क्योंकि केवल आत्मा साक्षात् स्नान वा भोजन नहीं कर सकता किन्तु शरीर ही के द्वारा स्नान भोजन करता है। इसलिये सामान्य लौकिक मनुष्यों की दृष्टि में यद्यपि बिना समझाये देवदत्त आदि शब्द के अर्थ का ठीक विवेक नहीं होता तथापि शरीर सहित आत्मा ही उक्त विचार के अनुसार लोक में देवदत्त आदि शब्द का अर्थ होता है। (वैसे) वैदिक श्राद्ध मन्त्रों के पितृ पितामह आदि शब्दों का केवल श्राद्धकर्त्ताओं के मरे बाप दादा ही अर्थ नहीं हैं किन्तु पितृ शब्द का वसु नामक देवताओं के सहित श्राद्धकर्ता का मृत पिता अर्थ है और पितामह शब्द का रुद्र नामक देवताओं के सहित श्राद्धकर्ता का मृत पितामह अर्थ है तथा प्रपितामह शब्द का आदित्यनामक देवताओं के सहित श्राद्धकर्ता का मृत प्रपितामह अर्थ है। और वसु, रुद्र, आदित्य, ये देवता मृत पिता, पितामह और प्रपितामह के अधिष्ठाता अर्थात् स्वामी हैं। इसी से ये देवता श्राद्ध रूपी अपने पूजन से

अत्र कुल्लूकः—यस्मात् 'पित्रादयो वस्वादय' इति एषा अनादिभूता श्रुतिरस्ति अतः पितॄन् वस्वाख्यदेवान् पितामहान् रुद्रान् प्रपितामहान् आदित्यान् मन्वादयो वदन्ति, ततश्च सिद्धबोधनवैयर्थ्यात् 'श्राद्धे पितादयो वस्वादिरूपेण ध्येया' इति विधिः कल्प्यते अत एव पैठीनसिः—य एवं विद्वान् पितॄन् यजते वसवो रुद्रा आदित्याश्चास्य प्रीता भवन्ति इति ।

वस्तुतस्तु 'एषे' ति प्रत्यक्षनिर्देशात्पादत्रयमपि श्रतिस्वरूपानुकरणमेवेति 'वसून् पितॄन् वदन्ति रुद्रान् पितामहानादित्यान् प्रपितामहानि' त्येव श्रुतेराकारो योऽत्र पाद-त्रयेणानूद्यते, तत्र च वेदवादिनः सामान्यतः कर्तारो वदत्यर्थस्य । एवं च यस्मादित्यत इति

भाषा

तृप्त होकर अन्य शरीर में वर्तमान श्राद्धकर्ता के पिता, पितामह, प्रपितामह को तृप्त कर देते हैं। और श्राद्धकर्ता पुत्रादि को समय से स्वर्गादि फल भी देते हैं। इस विषय में लौकिक उदाहरण यह है कि गर्भिणी स्त्री दूसरों के दिये हुए मिष्ट और बलकारी अन्न और पान आदि से स्वयं तृप्त होकर अपने गर्भस्थ अपत्य को तृप्त करती है। और अन्न पान आदि देने वालों को उस उपकार के बदले में यथाशक्ति प्रत्युपकार के द्वारा फल भी देती है इति ।

यह भावार्थ मिताक्षरा में कहा है और अक्षरार्थ इन श्लोकों का यह है कि वसु, रुद्र, आदित्य रूपी पितर अर्थात् वैदिक पिता, पितामह, प्रपितामह शब्द के अर्थ श्राद्ध के सम्प्रदान हैं। अर्थात् श्राद्धीय वस्तु इन्हीं को दी जाती हैं। श्राद्ध उक्त देवताओं का पूजन है और यही देवता श्राद्ध से तृप्त होकर अपने ज्ञान और शक्ति के अनुसार श्राद्धकर्ता के मृत पिता आदि अर्थात् देवदत्त आदि ही को केवल तृप्त नहीं करते किन्तु ये पितामह ( वसु आदि देवता ) तृप्त होकर श्राद्धकर्ताओं को भी आयु, प्रजा, धन, विद्या, राज्य, स्वर्ग, मोक्ष तथा शास्त्रोक्त अन्यान्य सुख भी देते हैं इति। और मनु ने भी पूर्व ही से कह रखा है कि '*वसून्वदन्ति*' मनु आदि वसुओं को पिता और रुद्रों को पितामह तथा आदित्यों को प्रपितामह कहते हैं, क्योंकि "*पित्रादयो वस्वादयः*" यह सनातनी श्रुति है। मन्वर्थ मुक्तावली में कुल्लूक भट्ट ने इस श्लोक का यह तात्पर्य कहा है कि श्राद्धकर्ता अपने मृत पिता आदि को यथाक्रम वसु आदि देवता रूप से ध्यान करे। और इसी बात को पैठीनसि महर्षि ने भी कहा है कि " *य एवं विद्वान्* " जो श्राद्धकर्ता अपने मृत पिता आदि को वसु आदि देवता रूप समझ कर उनका पूजन अर्थात् श्राद्ध करता है, उस श्राद्धकर्ता पर वसु, रुद्र, आदित्य देवता उस श्राद्ध से तृप्त होकर प्रसन्न होते हैं। वस्वादि देवता का यही पूजन ( जिसको श्राद्ध कहते हैं ) यदि केवल जल से किया जाय तो इसी को तर्पण कहते हैं।

जब कि अनन्तरोक्त प्रकरण में देवतापूजन का पूर्ण वर्णन हो चुका है और पितरों का श्राद्ध भी वसु आदि उक्त देवता का पूजन ही है। केवल विशेष इतना ही है कि अपने मृत पिता आदि रूपी मानसी प्रतिमा में वेदवाक्यों के अनुसार वसु आदि देवताओं का ध्यान इस कारण किया जाता है कि श्राद्ध से तृप्त होकर वे वसु आदि देवता अपने ज्ञान और शक्ति के अनुसार शरीरान्तरधारी उन देवदत्त आदि मृत पिता आदि को तृप्त करें। तब इसमें अधिक विशेष निरूपण की कोई आवश्यकता नहीं है। क्योंकि देवपूजन प्रकरण में सब कहा जा चुका है। और "श्राद्ध

च नाध्याहरणीयमिति लाघवम् कुल्लूकोक्तपरोक्षश्रुत्याकारस्वीकारे त्वेषेति निर्देशविरोधो दुर्वारोऽध्याहारद्वयगौरवञ्चेति ध्येयम् ।

वेदबाह्यैरप्यनेकजातीयैर्मृतानामुपकारमुद्दिश्य भगवदाराधनं बान्धवभोजनादिकं च स्वस्वकुलाचारपरम्पराप्राप्तं यदद्याप्यनुष्ठीयमानमनुभूयते तत्सर्वं श्राद्धस्य छायैव । अतः सर्वमनुष्यव्यापी श्राद्धरूपोऽसौ सामान्यधर्मः ।

अत्र श्रौतः प्रमाणपरिकरः 'अपराह्णे ददाति' ( श०२।४।२८ ) इति श्राद्धविधिः श्रूयते "वचनादित्यपूर्वत्वात्" ( पू० मी० सू० १०।४।२० ) इति न्यायात् तच्छेषभूतोऽर्थवादस्तु तत्रैव उक्तविधेरव्यवहितपूर्वम्—

पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणां तस्मादिति ।

एवमन्या अपि श्रुतयः—प्रजापतिं वै भूतान्युपासीदन् देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदंस्तानब्रवीद्यज्ञो वोऽन्नममृतत्वं व ऊर्ग्वः सूर्यो वो ज्योतिः ( श०२।४।२।१)

भाषा

में दी हुई वे ही सब वस्तुयें उठ कर मृत पितरों के समीप चली जाती हैं" यह दृष्टि तो अज्ञानियों की है, जिस पर नास्तिकों के बहुत से आक्षेप हुआ करते हैं ।

इस पर भी ध्यान देना चाहिये कि वेदबाह्य प्रत्येक जातियों के मनुष्य अपने २ आचार के अनुसार अपने मृत पिता आदि के उपकारार्थ भगवान् का आराधन तथा भाई-बन्धुओं का भोजन अर्थात् "चहलुम, चालीसा" आदि कुछ न कुछ अवश्य ही करते हैं, जो आज भी प्रसिद्ध है और वे सब कर्म पितृ श्राद्ध ही की छाया हैं । इस रीति से यह पितृ श्राद्ध रूपी सामान्य धर्म भी अन्य सामान्य धर्मों की नाईं सर्व मनुष्य व्यापी है । यद्यपि इसमें बहुत प्रमाण देने का प्रयोजन नहीं है तथापि अति दृढ़ता के लिये इस विषय में कुछ वैदिक प्रमाण दिखलाये जाते हैं कि—

( १ ) "अपराह्णे" अपराह्ण ( दिन का तृतीय प्रहर ) में ( पितरों के लिये ) दे ( श्राद्ध करे )। ( यह वाक्य पितृ श्राद्ध का विधान करता है ) और इसका अर्थवाद यह है कि—

( २ ) "पूर्वाह्णो" क्योंकि देवता की पूजा के लिये पूर्वाह्ण ( दिन का प्रथम प्रहर और ऋषि आदि मनुष्यों की पूजा के लिये मध्याह्न ( द्वितीय प्रहर ) तथा पितरों की पूजा के लिये अपराह्ण ( तृतीय प्रहर ) हैं । इसलिये "अपराह्ण में पितरों के लिये श्राद्ध करे" इस पूर्वोक्त विधि से इसका सम्बन्ध है क्योंकि वह विधिवाक्य इसके अनन्तर ही कहा है ।

( ३ ) "प्रजापतिं वै" "अथैनं पितरः" "अथैनं मनुष्याः" प्रजापति के समीप देवता बायें कन्धे पर यज्ञोपवीत धारण किये और दाहिने जानु को दबा कर प्रथम बैठते हैं और प्रजापति उनसे कहते हैं कि यज्ञ तुम्हारा अन्न है इत्यादि । तदनन्तर वसु आदि पितर दाहिने कन्धे पर यज्ञोपवीत धारण किये बायें जानु को दबाये बैठते हैं और प्रजापति उनसे कहते हैं कि मास मास में स्वधा ( श्राद्ध) तुम्हारा अन्न है इत्यादि । तदनन्तर मनुष्य लोग पद्मासन लगा कर प्रजापति के समीप बैठते हैं और प्रजापति उनसे कहते हैं कि सायं काल और प्रातः काल तुम्हारा भोजन है इत्यादि ।

अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीन्मासि मासि वोऽशनं स्वधा वो मनोजवश्चन्द्रमा वो ज्योतिरिति ( श० २।४।२।२ )

अथैनं मनुष्याः प्रावृता उपस्थं कृत्वोपासीदंस्तानब्रवीत् सायं प्रातर्वोऽशनं प्रजा वो मृत्युर्वोऽग्निर्ज्योतिः ( श० २।४।२।३ )

तिर इव हि पितरो मनुष्येभ्यः ( श० २।३।४।२।३ )

तृतीयाह प्रद्योरिति यस्यां पितर आसते ( अथर्व० १८।२।४८ )

ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दः ( बृ० उप० ६।३।३३ )

इत्याद्या द्रष्टव्याः । मन्त्राश्च सार्था यथा—

ये समानाः समनसः पितरो यमराज्ये ।
तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ (य० १६, मं० ४५)

प्रजापतिर्ऋषिः अनुष्टुप् छन्दः पितरो देवता दक्षिणामुखेनापसव्येन यजमानेन जुह्वा सकृद्गृहीतस्याज्यस्य दक्षिणाग्नौ होमे विनियोगः । अर्थस्तु तुल्यजातिरूपाः तुल्यशीलाः पितरो यमलोके ये सन्ति तेषां "लोकः" भोज्यमिदमाज्यं "स्वधा" दीयते "नमः" तेभ्य इति शेषः । "यज्ञः" अयं "देवेषु" यमेषु "कल्पताम्" तृप्तये पर्याप्तो भवतु इति

"पितॄनेवायं मे ददात्यथो पितृलोकमेव जयति" (श० १२।८।१।१६।४५) इति श्रुतेः ।

तत्रैव—ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिल्लोके शतꣳ समाः ॥ ४६ ॥

भाषा

( ४ ) "तिर इव" पितर मनुष्यों को प्रत्यक्ष नहीं होते । परन्तु प्रत्यक्ष फल देने से प्रत्यक्ष के तुल्य हैं ।

( ५ ) "तृतीयाह" भूलोक और आकाश लोक से तृतीय एक 'प्रद्यो' लोक है जिसमें पितर लोग वास करते हैं ।

( ६ ) "ये शतं०" मनुष्य लोक के आनन्द की अपेक्षा पितृ लोक में शतगुण आनन्द है।

ये सब वैदिक वाक्य पूर्वोक्त वैदिक श्राद्ध विधिवाक्य के अर्थवाद हैं । अब श्राद्ध के कतिपय मंत्र और ब्राह्मण अर्थ सहित दिखलाये जाते हैं कि–

( ७ ) "ये समानाः०" (मं) यमलोक में जो तुल्य जाति और तुल्य शील के पितर रहते हैं उनके लिये यह भोज्य दिया जाता है और उनको नमस्कार है । यह श्राद्ध रूपी यज्ञ यमराज को तृप्त करे क्योंकि—

( ८ ) "पितॄनेव०" ( ब्रा० ) जो पुरुष मंत्रों के द्वारा पितरों को यमराज के अधीन करता है उसको अन्त में पितृलोक मिलता है ।

( ९ ) "ये समानाः०" ( मं ) सब प्राणियों के विषय में समदर्शी और अन्योन्य में तुल्यशील जो मेरे सपिण्ड ( सात पुरुष के भीतर ) जीव पितर हैं उनकी कीर्ति इस लोक में सौ वर्ष तक मुझमें रहे ।

विनियोगः पूर्ववत्, अर्थस्तु 'जीवेषु' प्राणिषु 'समानाः' समदर्शिनः 'समनसः' तुल्यशीलाः 'मामका जीवाः' मत्सपिण्डाः पितरः 'तेषां श्रीः' लक्ष्मीः अस्मिँल्लोके शतं समाः मयि कल्पताम् इति ॥

द्वे सृती अशृणवम् पितॄणामहन्देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥ ४७ ॥

अहं 'द्वे सृती' मार्गौ मर्त्यानाम् अशृणवम् श्रुतिभ्य इति शेषः । कौ तावित्याह—देवानामुत पितॄणाम् देवयानं पितृयानं च 'यत्' यौ 'पितरं' द्युलोकं 'मातरञ्च' मातृभूमिं भूलोकं च 'अन्तरा' मध्ये वर्तेते 'इदं विश्वं एजत्' भूलोकवासिनः उपासकाः क्रियावन्तश्च ताभ्यां समेति प्रेत्य क्रमेण ताभ्यां मार्गाभ्यां सम्यगूर्ध्वलोकानाक्रामन्ति इति ।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥
( ऋ० मं० १० अ० १ सू० १५ मं० १ यजु० अ० १६ मं० ४६ )

अस्य मन्त्रस्य शङ्ख ऋषिः पितृमेधे चासौ विनियुक्तः ।

भाष्यम्—ये तावत् अवरे पितरः पृथिवीमाश्रिताः ते तावत् उदीरताम् ऊर्ध्वं गच्छन्तु, अथ पुनर्ये 'परासः' परे द्युलोकमाश्रिताः तेऽप्युदीरताम् । तेषामप्रच्युतिरस्तु मुच्यन्तां वा तदधिकारप्रचये । 'उन्मध्यमाः' पितरो येऽपि मध्यमाः मध्यस्थानाश्रयाः तेऽप्युदीरताम् उत्तमं लोकमाश्रयताम् 'सोम्यासः' सोमसम्पादिनः कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं सम्पादयन्ति किं प्रकारा 'असुं य ईयुः' प्राणमात्रमूर्तयः अस्थूलविग्रहाः 'अवृकाः' अनमित्राः परं साम्यमुपगताः 'ऋतज्ञाः' यथावत् सत्यवेदितारः यज्ञस्य वा य एवमादिगुणयुक्ताः पितरः ते 'नः' अस्माकं नित्यं 'अवन्तु' आगच्छन्तु । हवेषु आह्वानेषु इत्येतदाशास्महे माध्यमिको यम इत्याहुः नैरुक्ताः । तस्मात् पितॄन् माध्यमिकान् मन्यन्ते स हि तेषां राजेति ।

वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य (ऋ० म० १० अ० १ सू० १४ मं० १)

भाष्यम्—हे मदीयान्तरात्मन् यजमानं वा त्वं राजानं पितॄणां स्वामिनं यमं हविषा

भाषा

(१०) "द्वे सृती०" (ब्रा०) वेद से दो मार्ग मैं सुनता हूँ । एक देवताओं का और दूसरा पितरों का। अर्थात् एक देवयान, दूसरा पितृयान जो कि भूलोक और स्वर्ग लोक के बीच में हैं । भूलोकवासी उपासक शरीर छूटने के अनन्तर देवयान से और कर्मी लोग पितृयान से ऊपर के लोकों को जाते हैं।

(११) "उदीरता०" जो पितर पृथिवी पर अर्थात् किसी योनि में हैं वे ऊपर के लोकों को जायँ और जो पितर स्वर्गलोक में हैं वे वहाँ से च्युत न हों तथा स्वर्गभोग के अनन्तर मोक्ष पावें और जो मध्य के लोक में हैं वे भी ऊपर के लोक को जायँ तथा जो पितर यज्ञों में सोमरस का लाभ कराते हैं तथा प्राणमात्र अर्थात् सूक्ष्म जिनका शरीर है और जो कि समदृष्टि और सत्यज्ञानी हैं वे हमारे यज्ञों में नित्य आवें, यह प्रार्थना हमारी है । मध्य लोक में यमराज रहते हैं, इसी से उनको और उनके अधीन पितरों को भी माध्यमिक कहते हैं । यह मन्त्र यमलोक में पितरों की स्थिति बतलाता है।

पुरोडाशादिना 'दुवस्व' परिचर 'वैवस्वतं' विवस्वतः सूर्यस्य पुत्रं जनानां पापिनां सङ्गमनं गन्तव्यस्थानरूपमिति । अयं मन्त्रो यमस्य पितृराजत्वं प्रतिपादयति, पितॄणां च तदनुवर्तित्वान्मध्यमस्थानत्वरूपं तत्सालोक्यमपि ।

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः।

तेभिर्यमः स ँ रराणो हवी ँ ष्युशन्नुशद्भिः प्रतिकाममत्तु॥ (यजु० अ० १९ मं०५१)

शङ्ख ऋषिः पितरो देवता विनियोगः पूर्ववत्। अर्थस्तु 'सोम्यासः' सोमसम्पादकाः 'वसिष्ठा' वसिष्ठवंशयाः ये नः पूर्वे पितरः 'सोमपीथं' सोमपानं 'अनूहिरे' देवेभ्यः पश्चाच्चक्रिरे 'उशद्भिः' सोममिच्छद्भिः 'तेभिः' तैः सह 'रराणः' प्रसीदन् 'यमः' पितृपतिः 'हवींषि' मद्दत्तानीति शेषः प्रतिकामं यथेच्छम् अत्तु भुङ्क्ताम् इति ।

तत्रैव—त्वया हि नः पितरः सोम पूर्वे कर्माणिं चक्रुः पवमान धीराः ।

वन्वन्नवातः परिधी ँ रपोर्णु वीरेभिरश्वैर्मघवा भवानः ॥ ५२ ॥

शङ्ख ऋषिः सोमो देवता अर्थस्तु हे 'पवमान' शोधकसोम, धीराः नः पूर्वे पितरः त्वया कर्माणि यज्ञान् चक्रुः 'हि' यतः अतः हे 'वन्वन्' कर्मयुक्त 'अवातः' वाताद्युपद्रवरहितः त्वं 'परिधीन्' उपद्रवकारिणः 'अपोर्णु' दूरी कुरु। किं च 'नः' अस्माकम् 'वीरेभिः अश्वैः' वीरैरश्वैरुपलक्षितः मघवा इन्द्रः धनदातेति यावत् 'आ' समन्तात् भवेति ।

तत्रैव—बर्हिषदः पितरः ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।

त आगताऽवशा शन्तमेनाथा नः शंयोररपो दधात ॥ ५५ ॥

शङ्ख ऋषिः पितरो देवता, अर्थस्तु हे "बर्हिषदः" कुशासनाध्यासिनः पितरः 'ते' प्रसिद्धा यूयम् 'ऊत्या' रक्षा निमित्तकम् 'अर्वाक्' समीपे 'आगत' आगच्छत "वः इमाः हव्याः" युष्माकम् इमानि हवींषि वयं समस्कार्ष्म इमानि "आजुषध्वम्" सेवध्वम् 'अथ' अनन्तरम् 'शन्तमेन' अतिसुखदायिना 'अवसा' अन्नेन तृप्ता भूत्वा 'नः' अस्मासु "शंयोः" "अरपः" पापनाशनम् 'दधात' स्थापयतेति ।

भाषा

(१२) "ये नः०" वसिष्ठगोत्र में उत्पन्न तथा सोम को लाभ करने वाले जो मेरे पूर्व पितर देवताओं से पश्चात् सोमपान करते हैं, सोम चाहते हुये उन पितरों के साथ प्रसन्न होकर यमराज मेरे दिये हुये हवियों को यथेष्ट भोजन करें ।

(१३) "त्वया हि नः०" हे शोधन करने वाले कर्मयुक्त सोम ! वायु आदि के उपद्रव से रहित तुम उपद्रव कारियों को यज्ञस्थान से दूर करो तथा वीर अश्वों से युक्त तुम सब ओर से धनदाता हो जाओ, क्योंकि धीर पूर्व पितर तुम्हारे द्वारा यज्ञ कर चुके हैं ।

(१४) "बर्हिषदः०" हे कुश के आसन पर बैठने वाले प्रसिद्ध पितर ! तुम रक्षा करने के लिये समीप आओ। तुम्हारे लिये इन हवियों का संस्कार मैंने किया। इस हवि को भोजन करो और इससे तृप्त हो कर हम में पाप नाश को स्थापन करो। जो पितर अग्नि से दाह पा चुके हैं और जो दाह नहीं पाकर अपने पूर्व कर्मों से आनन्द करते हैं उनके लिये यमराज अपनी इच्छा के अनुसार प्राणयुक्त शरीर देते हैं ।

तत्रैव—आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५८ ॥

शङ्ख ऋषिः पितरो देवता, अर्थस्तु 'सोम्यासः' सोमयोग्याः 'अग्निष्वात्ताः' विधिवद-ग्निदाहेन और्ध्वदैहिककर्मप्राप्ताः नः पितरः देवयानैः, 'पथिभिः' देवयोग्यैर्मार्गैः अस्मिन्यज्ञे आयन्तु 'स्वधया' अत्र यज्ञे मद्दत्तेनान्नेन 'मदन्तः' प्रसीदन्तः 'ते' पितरः अस्मानधिब्रुवन्तु' अन्तरुपदिशन्तु "अवन्तु" रक्षन्तु इति ।

तत्रैव—ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ।
तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वङ्कल्पयाति ॥ ६० ॥

ये पितरः "अग्निष्वात्ताः" अग्निदाहेन और्ध्वदैहिकं प्राप्ताः ।
"यानग्निरेव दहनः स्वदयति ते पितरोऽग्निष्वात्ता" ॥ (श० ।२।५।५।७) इति श्रुतेः।

ये अनग्निष्वात्ताः दिवः मध्ये 'स्वधया' स्वोपार्जितकर्मभोगरूपेणान्नेन 'मादयन्ते' हृष्यन्ति 'स्वराट्' राजा यमः 'तेभ्यः' तेषामर्थे 'यथावशम्' स्वेच्छानुसारेण एतां मनुष्योद्दिष्टाम् 'असुनीतिम्' प्राणयुक्ताम् 'तन्वम्' देहम् कल्पयति ददाति इत्यर्थः ।

तत्रैव—आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे ।
मा हिं ॅसिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम ॥ ६२ ॥

हे 'विश्वे' सर्वे पितरः यूयम् 'जानु' वामम् 'आच्य' आनमय्य 'दक्षिणतः' दक्षिणा-मुखस्य मम पुरः 'निषद्य' आसित्वा इमं यज्ञमभिगृणीत वाचाऽभिनन्दत केनचिदपराधेन नः मा हिंसिष्ट 'यत्' यस्मात् 'पुरुषता' स्वाभाविकेनानवधानादिना पुरुषदोषेण "वः आगः वयं कराम" युष्माकम् अपराधं वयं कुर्म इत्यर्थः ।

भाषा

( १५ ) "*आयन्तु नः०*" सोम के योग्य और विधिवत् अग्निदाह से श्राद्ध कर्म को प्राप्त मेरे पितर इस यज्ञ में देवयान मार्ग से आवें तथा हमारे दिये अन्न से तृप्त हो हमारे भीतर उपदेश दें और हमारी रक्षा करें ।

( १६ ) "*ये अग्निष्वात्ता०*" जिनका अग्निदाह हो चुका है और जिनका अग्निदाह नहीं हुआ परन्तु अपने पुण्य के अनुसार वे सुखी हैं, उन सब के लिये राजा यम अपनी इच्छानुसार मनुष्यों के इष्ट प्राणयुक्त शरीर देते हैं ।

( १७ ) "*यानग्नि०*" ( ब्रा० ) जिनको अग्नि ही जलाते हैं वे पितर अग्नि स्वात हैं ।

( १८ ) "*आच्या जानु०*" हे सब पितरो ! बायें जानु को दबा कर दक्षिण मुख बैठे हुए मेरी दक्षिण दिशा में बैठ कर आप वचन से इस यज्ञ का अभिनन्दन करें । और किसी अपराध के कारण मुझे न मारें क्योंकि पुरुष के स्वाभाविक दोष अर्थात् अवधान न करना आदि के अनुसार हम आप के अपराधी हैं ।

तत्रैव—आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत त इहोर्जन्दधात ॥ ६३ ॥

हे पितरः ! 'अरुणीनाम्' अरुणवर्णानाम् रश्मीनाम् सूर्यकिरणानां वा 'उपस्थे' उपरि अङ्के वा 'आसीनासः' आसीना यूयम् "दाशुषे मर्त्याय" हविर्दत्तवते यजमानाय रयिं धनम् 'धत्त' धारयत तस्य पुत्रेभ्यः 'वस्वः' धनानि 'ते' यूयम् 'इह, यज्ञे 'ऊर्जं' रसम् 'दधात' स्थापयतेत्यर्थः ।

पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ ( य० १९ मं० ३७ )

'सोम्यासः' सोमयोग्याः पितरः भवन्तः 'शतायुषा' शतवर्षायुर्दायिना 'पवित्रेण' कुशमयेन पवित्रकेण मा पुनन्तु पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः अत्र मेत्यनुवर्तते पवित्रेण शतायुषेति पूर्ववत् अनयोर्वाक्ययोरभ्यासः स्वपवित्री करणाभिलाषातिशयद्योतनार्थः "विश्वमायुर्व्यश्नवै" पूर्णमायुः प्राप्यासमित्याशीः इत्यर्थः ।

आधत्त पितरो गर्भङ्कुमारम्पुष्करस्रजम् ।
यथेह पुरुषो असत् ( यजु० अ० २ मं० ३३ )

एवमेव चाश्वलायनोऽपि सूत्रयामास ३ अध्याये मनुरपि—

पतिव्रता धर्मपत्नी पतिपूजनतत्परा ।
मध्यमन्तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी ॥ २६२ ॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं सात्विकं धार्मिकं तथा ॥ २६३ ॥ इति ।

कुल्लूकः—धर्मार्थकामेषु मनोवाक्कायकर्मभिः पतिरेव मया परिचरणीय इति व्रतं यस्याः सा पतिव्रताः धर्मपत्नी सवर्णा प्रथमोढा श्राद्धक्रियाणां श्रद्धाशालिनी पुत्रार्थिनी तेषां पिण्डानां मध्यमं पितामहपिण्डं भक्षयेत् सम्यक् 'आधत्त पितरो गर्भ' मित्यादि गृह्योक्तमन्त्रेण ॥२६२॥इति ।

भाषा

( १९ ) "आसीनासो०" हे पितरो ! रक्त वर्ण वाले सूर्य किरण के ऊपर बैठ कर आप हवि देने वाले मनुष्य और उसके पुत्रों को धन दें और इस यज्ञ में सोमरस का स्थापन करें ।

( २० ) "पुनन्तु मा०" हे सोमयोग्य पितर ! शत वर्ष का आयु देने वाले आप कुश के पवित्रक से मुझे पवित्र करें तथा हे पितामह ! आप भी वैसे पवित्रक से मुझे पवित्र करें और हे प्रपितामह ! आप उस पवित्रक से मुझे पवित्र करें, मैं पूर्णायु जीऊँ ।

( २१ ) "आधात्त०" आधत्तेति मध्यमम्" इस कात्यायन सूत्र और आश्वलायन सूत्र तथा 'पतिव्रता०' इन मनुवाक्यों के अनुसार पुत्र चाहती स्त्री पार्वण श्राद्ध के मध्य अर्थात् पितामह पिण्ड को इस मन्त्र से भोजन करती है । मन्त्रार्थ यह है कि कमलमाला धारी अर्थात् अश्विनीकुमार के ऐसा पुत्र रूपी गर्भ का आधान आप मुझमें करें जिससे कि पुरुष, देवकार्य्य और पितृकार्य्य के योग्य इसी ऋतु काल में उत्पन्न हो ।

म० भा० का० सू० ( ४-१-२२ ) आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति। अथ मन्त्रव्याख्या। गायत्री पितृदेवत्या। हे पितरः यथा इहास्मिन्नेव ऋतौ पुरुषः देवपितृमनुष्याणामपेक्षितार्थस्य पूरयिता भूयात् तथा कुमारं गर्भं पुत्ररूपं गर्भमाधत्त सम्पादयत किम्भूतं कुमारं येन प्रकारेणेह पुष्करस्रजं पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ अश्वनीकुमारौ पुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ। तत्तुल्यः कुमारः पुष्करस्रक् तम्। अश्विसाम्यकथनेन रोगहीनं सुन्दरं च पुत्रमाधत्तेति सूचितम् ॥ ३३ ॥

ये जीवा ये च मृता ये जाता ये च यज्ञियाः।
तेभ्यो घृतस्य कुल्यैतु मधुधाराव्युन्दती ॥ अथर्व० १८।४।५६।

ये च अपि जीवाः जीवन्तः ये च मृताः ये जाताः ये च यज्ञियाः यज्ञं कर्तुमर्हाः तेभ्यः तेषां सर्वेषामर्थे व्युन्दती स्रवन्ती घृतस्य 'कुल्या' कृत्रिम सरित् 'मधुधारा' मधुनो धारा च अत्र 'गामश्वं पुरुषं पशु' मितिवत् 'आर्थिकः' समुच्चयः एतु आशिषि लोट् इत्यर्थः।

प्रेहि प्रेहि पथिभिः पूर्याणैर्येनाते पूर्वे पितरः परेताः।
उभा राजानौ स्वधया मदन्तौ यमं पश्यसि वरुणं च देवम् ॥
( अथर्व० १८।१।५४ )

'येना' यैः मार्गैः 'ते' तव पूर्वे पितरः—'परेताः' मृत्वागताः 'तैः' 'पूर्याणैः' आतिवाहिकशरीरयानरूपैः पथिभिः 'प्रेहि प्रेहि' मृतस्त्वं गच्छ गच्छ। 'स्वधया मदन्तौ' स्वधाख्येनान्नेन माद्यमानौ यमं वरुणं च देवम् 'उभा' उभौ राजानौ यथा क्रमं पितॄणामपां च पश्यसि द्रष्टासीत्यर्थः।

ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः।
सर्वांस्तानग्न आवह पितॄन् हविषे अत्तवे ॥ ( अथर्व० १८।२। मं० ३४ ).

हे अग्ने ! ये निखाताः भूमौ ये 'परोप्ताः' अनाथा मृताः क्वचिद्वनादौ त्यक्ताः ये दग्धाः ये च 'उद्धिताः' युधिष्ठिरवत् सशरीरा एव स्वर्गताः तान् सर्वान् 'हविषे' अत्तवे हविर्भोजनाय 'आवह' अत्र पितृकर्मणि आनयेत्यर्थः।

भाषा

(२२) "ये जीवा०" जो जीते हैं और जो मर गये तथा जो उत्पन्न हैं और जो यज्ञ करने योग्य हैं उन सब के लिये मैं चाहता हूँ कि घृत और मधु की धारा आवे।

(२३) "प्रेहि प्रेहि०" जिन मार्गों से तुम्हारे पूर्व पितर मृत होकर गये उन मार्गों से हे मृत ! तुम भी जाव जाव। स्वधा रूपी अन्न से तृप्त पितरों के राजा यमदेव और जलों के राजा वरुण देव को भी देखोगे।

(२४) "ये निखाता०" हे अग्ने ! जो पृथिवी में गाड़ दिये गये अथवा जो अनाथ मृत कहीं वन आदि में छोड़ दिये गये और जो अग्नि से दग्ध किये गये तथा जो उद्धृत ( राजा युधिष्ठिर की नाईं सदेह ही स्वर्ग को गये ) उन सब पितरों को हवि के भोजनार्थ आप इस श्राद्ध में पहुँचाइये।

ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते ।
त्वं तान् वेत्थ यति ते जातवेदः स्वधया यज्ञं स्वधितिं जुषन्ताम् ॥
( अथर्व० ३५ )

हे जातवेदः अग्ने ! ये अग्निदग्धा ये अनग्निदग्धाः पितरः 'दिवः' द्युलोकस्य 'मध्ये' मध्यमे यमलोके इति यावत् 'स्वधया मादयन्ते' अमृतरूपेणान्नेन मोदन्ते तान् तव द्वारे 'यति' त्वं वेत्थ तदेति शेषः । ते पितरः स्वधया 'स्वधितिं' पितृसम्बन्धिनं यज्ञं यावतः सर्वानिति यावत् इममित्यर्थात् 'जुषन्ताम्' सेवन्तामित्यर्थः ।

ये नः पितुः पितरो ये पितामहा य आविविशुरूर्वन्तरिक्षम् ।
य आक्षिपन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ॥ ( अथर्व० ४६ )

ये नः पितुः पितरः ये नः पितुः पितामहाः ये 'उरू' महत् 'अन्तरिक्षम्' पितृलोकम् 'आविविशुः' प्रविष्टवन्तः ये पृथिवीम् 'द्याम्' 'उत' अपि आक्षिपन्ति व्याप्नुवन्ति तेभ्यः पितृभ्यः 'नमसा' नमस्कारम् 'विधेम' विदधीमहीत्यर्थः ।

यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः ।
तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानुमन्यताम् ॥ (अ० १८।३।६९)

तिलमिश्राः स्वधावतीः स्वधायुक्ताः याः 'धानाः' तण्डुलान् 'ते' त्वदर्थम् अनुकिरामि ताः विभ्वीः अधिकाः प्रभ्वीः प्रभावयुक्ताः 'ते'त्वदर्थम् सन्तु 'ते' त्वदर्थम् ताः धानाः यमो राजा अनुमन्यताम् इत्यर्थः ।

आरभस्व जातवेदस्तेजस्वद्धरो अस्तु ते ।
शरीरमस्य संदहाथैनं धेहि सुकृतामु लोके ॥ ( अथर्व० ७१ )

हे 'जातवेदः' अग्ने ! आरभस्व ज्वलितुमिति शेषः । ते 'हरः' ज्वाला 'तेजस्वत्' प्रदीप्ता अस्तु । अस्य जीवस्य शरीरं संदह । 'अथ' अनन्तरम् 'एनम्' जीवम् 'सुकृताम् उ' पुण्यात्मनामेव लोके 'धेहि' धारयेत्यर्थः ।

भाषा

(२५) "*ये अग्नि०*" हे अग्ने ! जो पितर अग्नि से दग्ध अथवा नहीं दग्ध होकर आकाश के मध्य अर्थात् यमलोक में स्वधा अर्थात् अमृत रूपी अन्न से हर्ष पाते हैं उनको यदि आप जानते हैं तो वे पितर इस पितृयज्ञ को सेवन करें ।

(२६) "*ये नः पितुः०*" जो मेरे पिता के पितर और मेरे पिता के पितामह तथा जो आकाश के पितृलोक में अथवा पृथिवी वा स्वर्ग में व्याप्त हैं उन पितरों को नमस्कार करता हूँ ।

(२७) "*यास्ते०*" स्वधा शब्द से युक्त जिन तिल मिश्रित अक्षतों को मैं तुम्हारे लिये छींटता हूँ वे तुम्हारे लिये अधिक और प्रभावयुक्त हों और यमराज उन अक्षतों को तुम्हारे लिये स्वीकार करें ।

(२८) "*आरभस्व०*" हे अग्ने ! तुम प्रज्वलित होने लगो। तुम्हारी ज्वाला प्रदीप्त हो। इस जीव के शरीर को दग्ध करो । तदनन्तर पुण्यात्माओं ही के लोक में इस जीव को रक्खो ।

स्वधा पितृभ्यो दिविषद्भ्यः स्वधापितृभ्यो अन्तरिक्षद्भ्यः। (अथर्व० १८।४।८०।७९)

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।

तेषां वय ँ सुमतौ यज्ञियानामपि भद्रे सौमेनसे स्याम ॥ (यजु० अ० १९ मं० ५०)

ते 'नवग्वा' नवगतयः सोम्यासः सोमयोग्याः "अङ्गिरसः अथर्वाणः भृगवः" एषामृषीणां वंश्याः नः पितरः तेषां यज्ञियानाम् यज्ञकर्मोपयोगिनाम् 'सुमतौ' शुभबुद्धौ कल्याणकारिण्यां मनोवृत्तौ च भद्रे सौमनसे अपि वयं 'स्याम' स्थिता भवेम इत्यर्थः।

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ।

ताभ्यामेनं परिधेहि राजन् स्वस्ति चास्मा अनमीवं च धेहि ॥

( ऋ० मं० १० अ० १ सू० १५ मं० ११)

हे राजन्! यम रक्षितारौ तव गृहस्येत्यर्थात् 'चतुरक्षौ' चतुर्नेत्रौ 'पथिरक्षी' त्वन्मार्गरक्षिणौ 'नृचक्षसौ' नृषु प्रसिद्धौ श्वानौ श्यावशबलाविति यावत् ताभ्यामेनं मृतम् 'अनमीवम्' आरोग्यम् 'स्वति च' कल्याणमपि 'धेहि' धारय इत्यर्थः।

यमग्ने कव्यवाहन त्वं चिन्मन्यसे रयिम्।

तन्नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ (यजुः अ० १९ मं० ६४)

शङ्ख ऋषिरग्निर्देवता हे अग्ने 'कव्यवाहन' पितृभ्यो दत्तस्यान्नस्य प्रापक 'त्वं चित्' 'त्वमपि यं रयिं मन्यसे' यत् हवीरूपमन्नमुत्तमतया जानासि 'नः गीर्भिः' 'श्रवाय्यम्' अस्माकम् वचनैर्बोधनीयम् 'युजम् तम्' योग्यं तत् धनम् 'देवत्रा' देवाधीनम् देयम् 'आपनय' समन्तात्प्रापयेत्यर्थः।

यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः।

प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ ६५ ॥

भाषा

(२९) "स्वधा०" स्वर्गवासी पितरों के लिये स्वधा ( देता हूँ ) आकाश लोकवासी पितरों के लिये स्वधा।

(३०) "अङ्गिरसो०" सोम के योग्य और नवीन गति वाले अङ्गिरा अथर्वा अथवा भृगु ऋषि के वंश में उत्पन्न जो हमारे पितर हैं उनके यज्ञोपयोगी कल्याणकारिणी भद्र मनोवृत्ति में हम स्थित हों।

(३१) "यौ ते०" हे यमदेव! तुम्हारे गृह के रक्षक चार नेत्र वाले तुम्हारे मार्ग के रक्षक और मनुष्यों में प्रसिद्ध जो दो कुत्ते ( श्याव और शबल ) हैं उनको इस मृत जीव की रक्षा में नियुक्त कीजिये और इस मृत के लिये आरोग्य तथा कल्याण को धारण कीजिये।

(३२) "यमग्ने०" हे अग्ने! पितरों को दिये हुए अन्न को पहुँचाने वाले तुम भी जिस हवि रूपी अन्न को उत्तम समझते हो, हमारे वचन से बोध के योग्य देवताओं को दिये हुये उस हवि को सब ओर पहुँचा दो।

(३३) "यो अग्नि०" कव्य (पितरों को दिया हुआ अन्न) के पहुँचाने वाले यज्ञ के वृद्धिकारी जिन अग्नि ने पितरों का यज्ञ किया वे ही अग्नि देवता और पितरों से सब स्थानों में इस हवि का वर्णन करते हैं।

यः कव्यवाहनः 'ऋतावृधः' सत्यस्य यज्ञस्य वा वृद्धिकारी अग्निः पितॄन्यक्षत् इष्टवान् 'उ इत्' स एव देवेभ्यः पितृभ्यश्च हव्यानि हवींषि 'आप्रवोचति' समन्तात् कथयति इत्यर्थः।

त्वमग्न ईडितः कव्यवाहनावाड्ढव्यानि सुरभीणि कृत्वी।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवी ँ षि ॥ ६६ ॥

हे कव्यवाहन! अग्ने! 'ईडितः' ऋत्विग्भिः स्तुतः त्वम् 'हव्यानि सुरभीणि कृत्वी अवाट्' हवींषि सुरभीणि कृत्वा वहसि स्वधया पितृभ्यः प्रादाः पितृदेवत्यैर्मन्त्रैः पितृभ्यः प्रत्तवान् 'ते अक्षन्' भक्षितवन्तः हे 'देव'! अग्ने 'त्वम्' 'त्वमपि प्रयता हवींषि अद्धि' शुद्धानि हवींषि भुङ्क्ष्वेत्यर्थः।

ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म।
त्वं वेत्थ यतिते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ॥६७॥

इह लोके ये पितरो जन्मान्तरमाप्ताः ये च नेह यांश्च वयं 'विद्म' विद्मः यां उ च न प्रविद्मः विदन्तोऽपि क्व ते सन्ति अनेकपुरुषव्यवहिततत्वात् किमभिधानास्ते? इति विशिष्य न विद्मः। हे 'जातवेदः' सर्वज्ञ अग्ने त्वम् 'यतिते' यावन्तस्ते तावत इति शेषः। 'वेत्थ' विशिष्य जानासि स्वधाभिः पितृभ्यो दत्तैरन्नैः 'सुकृतम्' स्वनुष्ठितं यज्ञं जुषस्व सेवस्वेत्यर्थः।

इदम्पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः।
ये पार्थिवे रजस्या निषत्ता ये वा नून ँ सुवृजनासु विक्षु ॥६८॥

ये पूर्वासः पूर्वे पितरः वस्वादिसंज्ञाः 'ये उ' येऽपि 'परासः' परे अन्ये 'ईयुः' मृत्वा परलोकं प्राप्ताः ये 'पार्थिवे रजसि' स्वर्गादिलोके 'आनिषत्ता' समन्तादुपविष्टा 'वा' अथवा ये 'नूनं' निश्चितम् 'सुवृजनासु विक्षु' धर्मबलयुक्तासु प्रजासु मनुष्यलोक इति यावत् आनिषत्ता इत्यनुषज्यते अद्य तेभ्यः पितृभ्यः इदम् 'नमः' अन्नम् अस्तु इत्यर्थः।

भाषा

(३४) "त्वमग्न०" हे कव्यवाहन अग्ने! ऋत्विजों से की हुई स्तुति को सुनकर तुम हवि को सुगन्धित कर पहुँचाते हो और पितरों के मन्त्रों से वह हवि पितरों को तुमने दिया और वे उसको भक्षण कर चुके। हे देव अग्ने! अब तुम भी शुद्ध हवियों को भक्षण करो।

(३५) "ये चेह०" जो पितर इस लोक में जन्मान्तर पा चुके हैं तथा जो इस लोक में नहीं हैं और जिनको हम जानते हैं तथा जिनको अनेक पुरुषों के व्यवधान से हम विशेष रूप से नहीं जानते कि उनका क्या नाम है और कहाँ रहते हैं। हे सर्वज्ञ अग्ने! आप उन सबको विशेष रूप से जानते हो और आप पितरों को दिये हुए अन्न से भली भाँति किये हुये यज्ञ की सेवा करो।

(३६) "इदम्पितृभ्यो०" जो वसु, रुद्र, आदित्य नामक पुराने पितर हैं तथा जो अन्य पितर नये मृत होकर परलोक गये हैं तथा जो पितर स्वर्गादि लोक में बैठे हैं और जो पितर मनुष्य लोक में जन्मान्तर पाये हैं आज उन सब पितरोंके लिये यह अन्न उपकारी हो।

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरपव्रन् ॥६९॥

हे अग्ने ! 'यथा ऋतमाशुषाणाः' यज्ञं प्राप्तवन्तः 'परासः प्रत्नासः' प्राचीना नवीनाश्च नः पितरः 'अधाः' अधोलोकान् 'शुचि' पवित्रम् 'दीधितिम्' इत् सूर्यमण्डलमेव 'अयन्' प्राप्ताः तथा वयमिति शेषः 'उक्थशासः' उक्थनामकसामपाठिनः 'क्षामा' श्राद्धकर्मश्रमेण कृशाः भिन्दन्तः वेद्यादि निर्माणार्थं भूमिम् इत्यर्थात् 'अरुणीः' सूर्यज्योतींषि 'अपव्रन्' प्राप्नुयामेत्यर्थः ।

उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।
उशन्नुशत आवह पितॄन् हविषे अत्तवे ॥ ७० ॥

हे अग्ने ! 'उशन्तः' कामार्थिनो वयम् 'त्वा' त्वाम् 'निधीमहि' स्थापयामः उशन्तः 'समिधीमहि' त्वां प्रज्वलयामः हे 'उशन्' हविरभिलषन् त्वम् उशतः हविष्कामान् पितॄन् 'हविषे अत्तवे' हविर्भक्षणाय 'आवह' आनयेत्यर्थः ।

## अथ स्मार्तः

मनु० अध्या० ३—कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥ ८२ ॥
मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः ॥१९४॥
विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः ।
अग्निष्वात्ताश्च देवानां मारीचा लोकविश्रुताः ॥१९५॥

भाषा

(३७) "*अधा यथा०*" जैसे प्राचीन और नवीन पितर यज्ञ को प्राप्त होकर नीचे के लोक से पवित्र सूर्यमण्डल को प्राप्त हो गये वैसे उक्थ नामक साम मन्त्र के पढ़ने वाले और श्राद्ध के परिश्रम से दुर्बल वेदी आदि बनाने के लिये भूमि को खोदते खोदते हम भी सूर्य की किरणों पर चढ़ जायँ।

(३८) "*उशन्त०*" हे अग्ने! काम के अर्थी हम तुमको स्थापन करते हैं और प्रज्वलित करते हैं। हे हवि के चाहने वाले अग्नि! आप हवि के चाहने वाले पितरों को हवि के भोजनार्थ ले आइये।

यहाँ तक श्राद्ध के विषय में वैदिक प्रमाण दिखलाया गया। अब स्मृति प्रमाण दिखलाया जाता है, अर्थात् मनु अध्याय ३ के ९ श्लोक उद्धृत किये जाते हैं।

"*कुर्याद०*" पितरों की तृप्ति के लिए प्रतिदिन यथासम्भव अन्न वा जल वा दुग्ध वा मूल वा फल से श्राद्ध करै ॥ ८२ ॥

"*मनो०*" ब्रह्मा के पुत्र मनु के जो मरीचि, अत्रि, अङ्गिरा आदि ऋषि पुत्र हैं उन्हीं के पुत्र सोमप आदि पितृगण हैं ॥ १९४ ॥

"*विराट्०*" विराट के पुत्र सोमसद्गण साध्यों के पितर हैं और मरीचि के पुत्र लोकप्रसिद्ध अग्निष्वात्त नामक गण देवताओं के पितर हैं ॥ १९५ ॥

दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
सुपर्णकिन्नराणां च स्मृता बर्हिषदोऽत्रिजाः ॥१९६॥
सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः ।
वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः ॥१९७॥
सोमपास्तु कवेः पुत्रा हविष्मन्तोऽङ्गिरःसुताः ।
पुलस्त्यास्याज्यपाः पुत्रा वसिष्ठस्य सुकालिनः ॥१९८॥
अग्निदग्धानग्निदग्धान् काव्यान् बर्हिषदस्तथा ।
अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्दिशेत् ॥१९९॥
य एते तु गणा मुख्याः पितॄणां परिकीर्तिताः ।
तेषामपीह विज्ञेयं पुत्रपौत्रमनन्तकम् ॥२००॥
राजतैर्भाजनैरेषामथो वा राजतान्वितैः ।
वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते ॥२०२॥ इति ।

वा० रा० अयो० का० सर्ग १४—

रामाभिषेकसम्भारैः तदर्थमुपकल्पितैः ।
रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६ ॥

भाषा

"दैत्यदानव०" अत्रि के पुत्र बर्हिषद् नामक गण दैत्य, दानव, यक्ष, गन्धर्व, नाग, राक्षस, पक्षी और किन्नरों के पितर हैं ॥ १९६ ॥

"सोमपा०" कवि के पुत्र सोमप नामक गण ब्राह्मणों के और अङ्गिरा के पुत्र हविर्भुज नामक गण क्षत्रियों के तथा पुलस्त्य के पुत्र आज्यप नामक गण वैश्यों के और वसिष्ठ के पुत्र सुकालिन नामक गण शूद्रों के पितर हैं ॥ १९७ ॥ १९८ ॥

"अग्निदग्धा०" अग्निदग्ध, अनग्निदग्ध, काव्य, बर्हिषद्, अग्निष्वात्त और सौम्य नामक ये अन्य पितर भी ब्राह्मणों ही के हैं ॥ १९९ ॥

"य एते०" पितरों के प्रधान गण जो कहे गये उनके भी पुत्र, पौत्र आदि की परम्परा जगत् में अनन्त है और वे सब भी पितर ही हैं ( जो कि वर, वरेण्य आदि पितृगण मार्कण्डेय पुराण आदि में सुने जाते हैं ) ॥ २०० ॥

"राजतै०" इन पितरों के लिये रजतपात्र अथवा रजतयुक्त ताम्रादि पात्र से दिया हुआ जल मात्र भी अक्षय सुख का कारण होता है और खीर आदि को कौन कहे ॥ २०२ ॥

**अब श्राद्ध के विषय में इतिहास आदि प्रमाण दिये जाते हैं—**

बा० रा० अयो० सर्ग० १४—"राम०" राम के राज्याभिषेकार्थ जो सामग्री इकट्ठी की गई उससे मेरे मरने पर मेरे जलाञ्जलि आदि कर्म को राम के द्वारा कराना ॥ १६ ॥

सर्ग० ७७—ततो दशाहेऽतिगते कृतशौचो नृपात्मजः ।
द्वादशेऽहनि सम्प्राप्ते श्राद्धकर्माण्यकारयत् ॥ १ ॥

सर्ग० १०२—उत्तिष्ठ पुरुषव्याघ्र ! क्रियतामुदकं पितुः ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥
प्रियेण किल दत्तं हि पितृलोकेषु राघव !
अक्षयं भवतीत्याहुर्भवांश्चैव पितुः प्रियः ॥ ८ ॥

सर्ग० १०३—शीघ्रं स्रोतः समासाद्य तीर्थं शिवमकर्दमम् ।
सिषिचुस्तूदकं राज्ञे तत एतद्भवत्विति ॥ २५ ॥
प्रगृह्य तु महीपालो जलपूरितमञ्जलिम् ।
दिशं याम्यामभिमुखो रुदन्वचनमब्रवीत् ॥ २६ ॥
एतत्ते राजशार्दूल विमलं तोयमक्षयम् ।
पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥ २७ ॥
ततो मन्दाकिनीतीरं प्रत्युत्तीर्य स राघवः ।
पितुश्चकार तेजस्वी निर्वापं भ्रातृभिः सह ॥ २८ ॥
ऐङ्गुदं बदरैर्मिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्त्तो रुदन्वचनमब्रवीत् ॥ २९ ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥ इति ।

भाषा

सर्ग० ७७—"ततो दशाहे०" श्री दशरथ के शरीर छूटने के दश दिन बीतने के अनन्तर शुद्ध हो कर १२ वें दिन भरत ने श्राद्ध कर्म किया ॥ १ ॥

सर्ग० १०२—हे पुरुषव्याघ्र ( राम ) ! उठिये ! पिता का जलदान कीजिये । मैं और यह शत्रुघ्न भी पूर्व ही जलाञ्जलि दे चुके हैं । हे राघव ! अब आप दीजिये क्योंकि ॥ ७ ॥ ऐसा लोग कहते हैं कि प्रिय का दिया हुआ जल पितृलोक में अक्षय होता है और आप पिता के बड़े प्रिय हैं ॥ ८ ॥

सर्ग० १०३—शीघ्र ही नदी के समीप टीकुर ( कड़ी जमीन ) और शुद्ध घाट पर पहुँच कर राजा दशरथ के लिये जल देने का आरम्भ किया । और रोदन करते श्री राम ने दक्षिण मुख हो जल से पूर्ण अञ्जलि को उठाकर यह कहा कि ॥ २६ ॥ हे राजशार्दूल ! पितृलोक में गत आपके लिये यह मेरा दिया हुआ निर्मल जल अक्षय होकर उपस्थित हो ॥ २७ ॥ तदनन्तर मन्दाकिनी के तीर पर श्री राम ने भाइयों के साथ पिता का श्राद्ध किया ॥ २८ ॥ कुशों पर बैर के पत्तों से मिश्रित इङ्गुआ का फल अर्थात् पिन्नी को रख कर दुःखार्त श्रीराम ने कहा कि ॥ २९ ॥ हे महाराज ! प्रसन्न हो कर यह भोजन कीजिये जो कि हम भोजन किया करते हैं क्योंकि जिस पुरुष के लिये जो अन्न है वही उसके देवता के लिये भी ॥ ३० ॥

भारते स्त्रीपर्वणि—

अ० २६, धृत०—येऽत्रानाथा जनस्यास्य सनाथा ये च भारत।
कच्चित्तेषां शरीराणि धक्ष्यन्ति विधिपूर्वकम् ॥ २१ ॥
न येषां सन्ति कर्तारो न च येऽत्राहिताग्नयः।
वयं च कस्य कुर्याम बहुत्वात्तात कर्मणः ॥ २२ ॥
यान् सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः।
तेषान्तु कर्मणा लोका भविष्यन्ति युधिष्ठिर ॥ २३ ॥
वैशम्पा०—एवमुक्तो महाप्राज्ञः कुन्तीपुत्रो युधिष्ठिरः।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ २४ ॥
विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम्।
इन्द्रसेनमुखांश्चैव भृत्यान् सूतांश्च सर्वतः ॥ २५ ॥
भवन्तः कारयन्त्वेषां प्रेतकार्याण्यनेकशः।
यथा चानाथवत् किञ्चिच्छरीरं न विनश्यति ॥ २६ ॥
शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः।
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ २७ ॥
चन्दनागुरुकाष्ठानि तथा कालीयकान्युत।
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च ॥ २८ ॥
समाहृत्य महार्हाणि दारूणां चैव सञ्चयान्।
रथांश्च मृदितांस्तत्र नानाप्रहरणानि च ॥ २९ ॥
चिताः कृत्वा प्रयत्नेन यथा मुख्यान्नराधिप।
दाहयामासुरव्यग्रा विधिदृष्टेन कर्मणा ॥ ३० ॥

भाषा

म० भा० स्त्री० प० अ० २६—"येऽत्र०" हे युधिष्ठिर ! यहाँ जो मृतक अनाथ हैं। और जो सनाथ हैं क्या उनके शरीरों का विधिवत् दाह होगा ? ॥ २१ ॥ जिनके दाह करने वाले कोई नहीं हैं और वे अग्निहोत्री भी न थे, क्या उनका दाह विधिवत् होगा ? बहुत लोग ऐसे इस युद्ध में मरे हैं, हम किसका २ कर्म करेंगे ? ॥ २२ ॥ जिनको गरुड़ और गीध चोंचों और चंगुलों से इधर उधर खींच रहे हैं उनके अच्छे लोक कर्म करने से होंगे ? ॥ २३ ॥

वैश०—ऐसा सुन महा बुद्धिमान् कुन्तीपुत्र युधिष्ठिर ने सुधर्मा और धौम्य पुरोहित तथा सञ्जय और महाबुद्धि विदुर तथा कौरव युयुत्सु और इन्द्रसेन आदि भृत्यों तथा सब सूतों को यह आज्ञा दिया कि आप लोग इन मृतों का ऐसा शास्त्रीय कर्म कराइये जिसमें कि कोई एक भी शरीर अनाथ के ऐसा कर्म से वञ्चित न रह जाय। ॥ २४—२६ ॥

धर्मराज की आज्ञानुसार उन लोगों ने चन्दन, अगर और सामान्य अन्यान्य काष्ठों की राशि तथा घी, तेल और अन्यान्य सुगन्धित वस्तु और बड़े २ मूल्य के रेशमी कपड़े और टूटे फूटे रथ और

दुर्योधनं च राजानं भ्रातॄंश्चास्य शताधिकान् ।
शल्यं शलं च राजानं भूरिश्रवसमेव च ॥ ३१ ॥
जयद्रथं च राजानमभिमन्युं च भारत ।
दौःशासनिं लक्ष्मणं च धृष्टकेतुं च पार्थिवम् ॥ ३२ ॥
बृहन्तं सोमदत्तं च सृञ्जयांश्च शताधिकान् ।
राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ॥ ३३ ॥
शिखण्डिनं च पाञ्चाल्यं धृष्टद्युम्नं च पार्षतम् ।
युधामन्युञ्च विक्रान्तमुत्तमौजसमेव च ॥ ३४ ॥
कौशल्यं द्रौपदेयांश्च शकुनिं चैव सौबलम् ।
अचलं वृषकं चैव भगदत्तं च पार्थिवम् ॥ ३५ ॥
कर्णं वैकर्त्तनं चैव सहपुत्रममर्षणम् ।
केकयांश्च महेष्वासांस्त्रिगर्तांश्च महारथान् ॥ ३६ ॥
घटोत्कचं राक्षसेन्द्रं बकभ्रातारमेव च ।
अलम्बुषं राक्षसेन्द्रं जलसन्धं च पार्थिवम् ॥ ३७ ॥
अन्यांश्च पार्थिवान् राजन् शतशोऽथ सहस्रशः ।
घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन् ॥ ३८ ॥
पितृमेधाश्च केषांचित्प्रावर्तन्त महात्मनाम् ।
सामभिश्चाप्यगायन्त तेऽन्वशोचन्त चापरैः ॥ ३९ ॥
साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः ।
कश्मलं सर्वभूतानां निशायां समजायत ॥ ४० ॥

भाषा

अनेक प्रकार के शस्त्रों में लगे हुये काष्ठों को इकट्ठा कर चिताओं को प्रयत्न से बना विधिपूर्वक मुख्य २ पुरुषों अर्थात् राजा दुर्योधन और उनके ९९ भ्राता तथा राजा शल्य और शल तथा भूरिश्रवा और जयद्रथ तथा अर्जुन के पुत्र अभिमन्यु और राजपुत्र लक्ष्मण और राजा धृष्टकेतु तथा सोमदत्त और सृञ्जय नामक सैकड़ों राजे और राजा क्षेमधन्वा, विराट, द्रुपद, शिखण्डी, धृष्टद्युम्न, युधामन्यु, उत्तमौजा और कोशलराज तथा द्रौपदी के पांच पुत्र और खंधार के राजा शकुनि और राजा अचल और वृषक तथा चीन के राजा भगदत्त तथा अपने पुत्रों के सहित कर्ण और केकय और त्रिगर्त देश के प्रसिद्ध २ महारथ तथा राक्षसेन्द्र घटोत्कच और राक्षस अलायुध और राक्षस अलम्बुष तथा राजा जलसन्ध और सैकड़ों तथा सहस्रों अन्यान्य राजाओं को घृतधारा से प्रज्वलित अग्नियों में दाह करवा दिया ॥ २७—३८ ॥ और बहुतों के पितृयज्ञ भी होने लगे तथा साम मन्त्रों का गान होने लगा और जीते लोग मरों का शोक करने लगे ॥ ३९ ॥ साम मन्त्रों के निर्घोष और स्त्रियों की चिल्लाहट सुन उस रात्रि समय में सब प्राणियों को बड़ा शोक हुआ ॥ ४० ॥

ते विधूमाः प्रदीप्ताश्च दीप्यमानाश्च पावकाः ।
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ॥ ४१ ॥
ये चाप्यनाथास्तत्रासन्नानादेशसमागताः ।
तांश्च सर्वान् समानाय्य राशीन् कृत्वा सहस्रशः ॥ ४२ ॥
चित्वा दारुभिरव्यग्रैः प्रभूतैः स्नेहपाचितैः ।
दाहयामास विदुरो धर्मराजस्य शासनात् ॥ ४३ ॥
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ ४४ ॥

स्त्री० प० अ० २७, ते समासाद्य गङ्गान्तु शिवां पुण्यजलोचिताम् ।
वैश०—ह्रदिनीं च प्रसन्नां च महारूपां महाबलाम् ॥ १ ॥
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
ततः पितॄणां पौत्राणां भ्रातॄणां स्वजनस्य च ॥ २ ॥
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः ।
उदकं चक्रिरे सर्वा रुदत्यो भृशदुःखिताः ॥
सुहृदाञ्चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः ॥ ३ ॥
उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।
सूपतीर्थाऽभवद्गङ्गा भूयो वै प्रससार च ॥ ४ ॥

भाषा

जैसे आकाश में पतले मेघ के ओट में ग्रह देख पड़ते हैं वैसे उस युद्धभूमि में निर्धूम और सधूम जाज्वल्यमान वे चिता के सब अग्नि देख पड़ते थे ॥ ४१ ॥ नाना देशों से आये हुये जो अनाथ मृतक थे, उनका भी सहस्रों २ की एक २ राशि कर काष्ठों और घृतों से धर्मराज की आज्ञानुसार विदुर ने दाह करवा दिया अर्थात् एक शरीर भी दाह से नहीं बचा ॥ ४२ ॥ ४३ ॥ (आगे चल कर धर्मयुद्ध प्रकरण में यह भली भाँति दिखलाया जायगा कि अनेक देशों के बहुत से म्लेच्छ वीर भी भारतयुद्ध में मरे और यहाँ से यह स्पष्ट होता है कि धर्मज्ञ राजा युधिष्ठिर ने महापण्डित विदुर के द्वारा म्लेच्छ मृतकों का भी दाह करवाया जो कि म्लेच्छ सम्प्रदाय के विरुद्ध है और इसमें दो ही कारण ज्ञात होता है । एक यह कि युद्धमृत्यु के कारण उनका शरीर पवित्र होकर दाह के योग्य हो गया था, अथवा दूसरा यह कि म्लेच्छ भी सब परम्परा से आर्य्यों ही के सन्तान हैं जैसा कि 'वेददुर्गसज्जन' में कहा जा चुका है । राजा युधिष्ठिर ने मृतकों की क्रिया करा कर धृतराष्ट्र को आगे कर गङ्गायात्रा के लिये प्रस्थान किया ॥ ४४ ॥

अ० २७, वैश०—गङ्गा के तीर पहुँच कर भूषण वस्त्र आदि उतार कौरवों की स्त्रियाँ सब बड़े दुःख से रोदन करती हुईं अपने २ पिता, पुत्र, पति और भ्राता आदि को जलाञ्जलि देने लगीं और उस समय गङ्गा में थाह हो गया और तत्पश्चात् पुनः गङ्गा बढ़ गई ॥ १—४ ॥ आनन्द से रहित

तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् ।
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत ॥ ५ ॥

ततः कुन्ती महाराज सहसा शोककर्षिता ।
रुदती मन्दया वाचा पुत्रान् वचनमब्रवीत् ॥ ६ ॥

यः स शूरो महेष्वासो रथयूथपयूथपः ।
अर्जुनेन हतः सङ्ख्ये वीरलक्षणलक्षितः ॥ ७ ॥

यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ।
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ ८ ॥

प्रत्ययुध्यत यः सर्वान् पुरा वः सपदानुगान् ।
दुर्योधनबलं सर्वं यः प्रकर्षन् व्यरोचत ॥ ९ ॥

यस्य नास्ति समो वीर्य्ये पृथिव्यामपि कश्चन ।
यो वृणीत यशः शूरः प्राणैरपि सदा भुवि ॥ १० ॥

सत्यसन्धस्य शूरस्य सङ्ग्रामेष्वपलायिनः ।
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ ११ ॥

स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत ।
कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ १२ ॥

श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवान्वशोचन्त भूयश्चार्ततराभवन् ॥ १३ ॥

भाषा

तथा उत्सव से शून्य और वीर पत्नियों से सङ्कुल वह गङ्गातीर समुद्र की तरह दुर्गम देख पड़ता था ॥ ५ ॥ हे महाराज ( जनमेजय ) ! इतने ही में शोक से उद्विग्न और रोती हुई कुन्ती ने मन्द वचन से अपने पुत्रों से कहा कि ॥ ६ ॥ जो वह शूर तथा महा धनुर्धर और रथ यूथों के स्वामियों का स्वामी और वीर लक्षणों से युक्त युद्ध में अर्जुन के हाथ से मारा गया और हे पाण्डवो ! जिसको तुम सूत का पुत्र और राधा के गर्भ से उत्पन्न मानते थे तथा जो सैन्यों के मध्य में सूर्य के ऐसा शोभित हो तुम और तुम्हारे सब सैन्यों के साथ अकेला लड़ता था और दुर्योधन के सब सैन्य उसके पीछे चलते थे तथा पृथिवी में जिसके समान कोई वीर न था, जो कीर्ति की अपेक्षा अपने प्राणों को कुछ भी नहीं समझता था. उस सत्यवादी और शूर तथा संग्राम से कदापि न भागने वाले अपने धर्मात्मा भाई को तुम जलाञ्जलि दो । क्योंकि ॥ ७—११ ॥ वह तुम्हारा ज्येष्ठ भ्राता सूर्य के तुल्य और शूर, कवच कुण्डल पहिरे सूर्य से मुझमें उत्पन्न हुआ था ॥ १२ ॥

सब पाण्डवों ने माता के इस अप्रिय वचन को सुन, सबका शोक छोड़ कर्ण ही के शोक से बड़े दुःखी हुये ॥ १३ ॥ तदनन्तर क्रुद्ध सर्प के ऐसा श्वास खींचते हुये राजा युधिष्ठिर ने माता

ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निःश्वसन्निव पन्नगः ॥ १४ ॥
यः शरोर्मिध्वजावर्त्तो महाभुजमहाग्रहः ।
तलशब्दानुनदितो, महारथमहाह्रदः ॥ १५ ॥
यस्येषुपातमासाद्य नान्यस्तिष्ठेद्धनञ्जयात् ।
भवत्या स कथं पुत्रो देवगर्भः पुराऽभवत् ॥ १६ ॥
यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् ।
तमग्निमिव वस्त्रेण कथं छादितवत्यसि ॥ १७ ॥
यस्य बाहुबलं नित्यं धार्तराष्ट्रैरुपासितम् ।
उपासितं यथाऽस्माभिर्बलं गाण्डीवधन्वनः ॥ १८ ॥
भूमिपानां च सर्वेषां बलं बलवतां वरः ।
नान्यः कुन्तीसुतात्कर्णादगृह्णाद्रथिना रथी ॥ १९ ॥
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः ।
असूत तं भवत्यग्रे कथमद्भुतविक्रमम् ॥ २० ॥
अहो भवत्या मन्त्रस्य ग्रहणेन वयं हताः ।
निधनेन हि कर्णस्य पीडिताः स्म सबान्धवाः ॥ २१ ॥
अभिमन्योर्विनाशेन द्रौपदेयवधेन च ।
पञ्चालानाञ्च नाशेन कुरूणां पतनेन च ॥ २२ ॥
ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम् ।
कर्णमेवानुशोचन् हि सन्दह्येऽग्नाविवाहितः ॥ २३ ॥

भाषा

से कहा कि जिसके वाण के सामने अर्जुन से अन्य कोई नहीं खड़ा होता था वह देवगर्भ पुत्र तुमसे कैसे हुआ ? ॥ १४—१६ ॥ जिसके बाहुओं के प्रताप से हम सब सन्तप्त रहते थे। जैसे कोई अग्नि को वस्त्र से आच्छादित करे वैसे तुम उसको कैसे आज तक आच्छादित किये रही ? ॥ १७ ॥

जैसे अर्जुन के बल का हम सब भरोसा करते थे वैसे धृतराष्ट्र के पुत्र जिसके बाहुबल का भरोसा रखते थे और जो अकेला बड़े २ महारथों के और अनेक राजाओं के सैन्यों को नाश कर देता था उस मेरे आश्चर्य पराक्रम वाले ज्येष्ठ भाई को कैसे तुमने उत्पन्न किया ? ॥१८—२०॥ ओ ! हो !! तुम्हारे इस मन्त्र गोपन से हम मारे गये क्योंकि कर्ण की मृत्यु से हम सब बहुत ही पीड़ित हुए ॥ २१ ॥

अभिमन्यु तथा द्रौपदी के पाँचो पुत्र और पाञ्चालवीरों तथा कुरुवीरों के नाश से जो दुःख हमको हुआ उससे शतगुण दुःख आज हमको हुआ क्योंकि जैसे कोई अग्नि में डाला हुआ जले वैसे कर्ण के शोकाग्नि में हम जल रहे हैं ॥ २२॥ २३ ॥

नेह स्म किञ्चिदप्राप्यं भवेदपि दिवि स्थितम् ।
न चेदं वैशसं घोरं कौरवान्तकरं भवेत् ॥ २४ ॥
एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः ।
विनदन् दुःखितो राजा चकारास्योदकं प्रभुः ॥ २५ ॥
ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः ।
अभितो याः स्थितास्तत्र तस्मिन्नुदककर्मणि ॥ २६ ॥
तत आनाययामास कर्णस्य सपरिच्छदाः ।
स्त्रियः कुरुपतिर्धीमान् भ्रातुः प्रेम्णा युधिष्ठिरः ॥ २७ ॥
स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम् ।
कृत्वोत्तरारगङ्गायाः सलिलादाकुलेन्द्रियः ॥ २८ ॥ इति ।

आश्रमवासिके पर्वणि अ० ११—

वैश०—ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽम्बिकासुतः ।
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ १ ॥
स गत्वा राजवचनादुवाचाच्युतमीश्वरम् ।
युधिष्ठिरं महातेजाः सर्वबुद्धिमतां वरः ॥ २ ॥
धृतराष्ट्रो महाराजो वनवासाय दीक्षितः ।
गमिष्यति वनं राजन्नागतां कार्तिकीमिमाम् ॥ ३ ॥
स त्वां कुरुकुलश्रेष्ठ किञ्चिदर्थमभीप्सति ।
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ॥ ४ ॥

भाषा

यदि यह बात प्रथम ही हमको ज्ञात होती तो कौरवों का नाशकारी यह महाघोर युद्ध कदापि न होता और कर्ण तथा अर्जुन के पराक्रम से स्वर्ग का भी कोई पदार्थ हमको दुर्लभ न होता ॥ २४ ॥ इस प्रकार बहुत विलाप कर दुःखित और चिल्लाते हुये राजा युधिष्ठिर ने कर्ण के नाम से जलाञ्जलि दी । तदनन्तर उस जलाञ्जलि देने में वहाँ की सब स्त्रियाँ एक साथ उच्चस्वर से चिल्लाने लगीं ॥ २५ ॥ २६ ॥ तत्पश्चात् भाई के प्रेम से राजा युधिष्ठिर ने कर्ण की स्त्रियों को समीप बुला कर उनके साथ प्रेतकृत्य कर गङ्गा से बाहर व्याकुल हो निकले ॥ २८ ॥ इति ।

अ० ११, वैश०—तदनन्तर रात्रि बीते धृतराष्ट्र ने युधिष्ठिर के गृह विदुर को प्रेषण किया ॥ १ ॥ और विदुर ने जाकर राजा के वचनानुसार युधिष्ठिर से कहा कि हे राजन् ! इसी आगामी कार्तिकपूर्णिमा को धृतराष्ट्र महाराज वनवास के लिये दीक्षित होकर वन जायँगे ॥ ३ ॥ हे कुरुकुलश्रेष्ठ ! वह आपसे कुछ धन लिया चाहते हैं । क्योंकि भीष्म, द्रोण, सोमदत्त, बाह्लीक

द्रोणस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
पुत्राणाञ्चैव सर्वेषां ये चान्ये सुहृदो हताः ॥
यदि चाप्यनुजानीषे सैन्धवापसदस्य च ॥ ५ ॥
एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः ।
हृष्टः सम्पूजयामास गुडाकेशश्च पाण्डवः ॥ ६ ॥
न तु भीमो दृढक्रोधस्तद्वचो जगृहे तदा ।
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् ॥ ७ ॥
अभिप्रायं विदित्वा तु भीमसेनस्य फाल्गुनः ।
किरीटी किञ्चिदानम्य तमुवाच नरर्षभम् ॥ ८ ॥
भीम राजा पिता वृद्धो वनवासाय दीक्षितः ।
दातुमिच्छति सर्वेषां सुहृदामौर्ध्वदेहिकम् ॥ ९ ॥
भवता निर्जितं वित्तं दातुमिच्छति कौरवः ।
भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि ॥ १० ॥
दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचते ।
याचितो यः पुरास्माभिः पश्य कालस्य पर्ययम् ॥ ११ ॥
योऽसौ पृथिव्याः कृत्स्नाया भर्ता भूत्वा नराधिपः ।
परैर्विनिहतामात्यो वनं गन्तुमभीप्सति ॥ १२ ॥
मा तेऽन्यत्पुरुषव्याघ्र दानाद्भवतु दर्शनम् ।
अयशस्यमतोऽन्यत्स्यादधर्मश्च महाभुज ॥ १३ ॥

भाषा

और अपने सब पुत्रों तथा जो उनके मित्र युद्ध में मारे गये उनको और सिन्धुराज जयद्रथ को भी यदि आप अनुज्ञा देते हैं तो वह श्राद्ध दिया चाहते हैं ॥ ४ ॥ ५ ॥

ऐसा सुन युधिष्ठिर और अर्जुन विदुर के इस वाक्य की प्रशंसा करने लगे ॥ ६ ॥ परन्तु दुर्योधन के दिये हुये दुःखों को स्मरण कर दृढ़क्रोध भीमसेन ने इस वचन को ग्रहण नहीं किया अर्थात् मौन रहे ॥ ७ ॥ अर्जुन ने उनका अभिप्राय समझ थोड़ा झुक कर उनसे कहा कि ॥ ८ ॥ हे भीम ! वनवास के लिये दीक्षित बड़े पिता राजा, भीष्मादि सब सम्बन्धियों को श्राद्ध देना चाहते हैं और उसमें आपका विजय किया हुआ धन दिया चाहते हैं । उसके विषय में अनुज्ञा आपको देनी चाहिये ॥ ९ ॥ १० ॥ हे महाबाहो ! जिनसे पूर्व ही हम लोग माँगते थे वह धृतराष्ट्र संयोग से आज हमसे माँगते हैं । काल के इस उलटफेर को देखिये ॥ ११ ॥ पूर्ण पृथिवी के स्वामी वह थे और इस समय शत्रुओं के हाथ से अनाथ होकर वन जाया चाहते हैं ॥ १२ ॥

हे महाभुज पुरुषव्याघ्र ! इन बातों पर ध्यान देकर देने से अन्य प्रकार पर आपकी मति न हो क्योंकि ऐसा करने में अपकीर्ति और अधर्म दोनों होंगे ॥ १३ ॥ हे भरतर्षभ ! अपने ज्येष्ठ

राजानमुपशिक्षस्व ज्येष्ठं भ्रातरमीश्वरम् ।
अर्हस्त्वमपि दातुं वै नादातुं भरतर्षभ ॥ १४ ॥
एवं ब्रुवाणं बीभत्सुं धर्मराजोऽप्यपूजयत् ।
भीमसेनस्तु सक्रोधः प्रोवाचेदं वचस्तदा ॥ १५ ॥
वयं भीष्मस्य दास्यामः प्रेतकार्यं च फाल्गुन ।
सोमदत्तस्य नृपतेर्भूरिश्रवस एव च ॥ १६ ॥
बाह्लीकस्य च राजर्षेर्द्रोणस्य च महात्मनः ।
अन्येषां चैव सर्वेषां कुन्ती कर्णाय दास्यति ॥ १७ ॥
श्राद्धानि पुरुषव्याघ्र मा प्रादात् कौरवो नृपः ।
इति मे वर्तते बुद्धिर्मा नो नन्दन्तु शत्रवः ॥ १८ ॥
कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः ।
यैरियं पृथिवी कृत्स्ना घातिता कुलपांसनैः ॥ १९ ॥
कुतस्त्वमसि विस्मृत्य वैरं द्वादशवार्षिकम् ।
अज्ञातवासं गहनं द्रौपदीशोकवर्द्धनम् ॥ २० ॥
क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मास्वभवत्तदा ।
कृष्णाजिनोपसंवीतो हृताभरणभूषणः ॥ २१ ॥
सार्द्धं पाञ्चालपुत्र्या त्वं राजानमुपजग्मिवान् ।
क्व तदा द्रोणभीष्मौ तौ सोमदत्तोऽपि वाऽभवत् ॥ २२ ॥
यत्र त्रयोदशसमा वने वन्येन जीवथ ।
न तदा त्वां पिता ज्येष्ठः पितृत्वेनाभिवीक्षते ॥ २३ ॥

भाषा

भ्राता इन राजा की शिक्षा आप लें क्योंकि आप देने के योग्य हैं न कि लेने के ॥ १४ ॥ इस वचन को सुन धर्मराज ने भी अर्जुन की प्रशंसा की परन्तु भीमसेन ने क्रोध से यह कहा कि हे पुरुषव्याघ्र ! मेरी यह बुद्धि है कि भीष्म, सोमदत्त, भूरिश्रवा तथा महात्मा द्रोण और अन्य लोगों को हम श्राद्ध देंगे और कर्ण को कुन्ती देगी । राजा धृतराष्ट्र किसी को श्राद्ध न दें और जिन कुलपांसनों ने पृथिवी भर को मरवा डाला वे दुर्योधनादि हमारे शत्रु कदापि आनन्द न पावें, किन्तु कष्ट से भी अतिकष्ट दशा को प्राप्त हों ॥ १५—१९ ॥ और मैं नहीं समझता कि एक वर्ष अज्ञात वास वाले और द्रौपदी के शोक को बढ़ाने वाले उस बारह वर्षों वाले वैर को तुम कैसे भूल बैठे हो ! ॥ २० ॥ तब हममें धृतराष्ट्र का प्रेम और स्नेह कहाँ था ? जब भूषण वस्त्र तुम्हारे सब छीने गये और कृष्ण मृगचर्म धारण कर द्रौपदी के साथ तुम इन्हीं राजा धृतराष्ट्र के समीप गये । उस समय द्रोण, भीष्म और सोमदत्त कहाँ थे ? ॥ २१ ॥ २२ ॥ जब कि तुम वनफल खाकर तेरह वर्ष जीते थे तब तो ये तुम्हारे बड़े पिता तुमको इस दृष्टि से नहीं देखते थे । क्या अर्जुन ! तुमको वह भूल गया कि इस कुलपांसन और दुर्बुद्धि (धृतराष्ट्र) ने इन्हीं विदुर से पूछा कि द्यूत में क्या २ जीता गया ॥ २३ ॥

किं ते तद्विस्मृतं पार्थ यदेष कुलपांसनः ।
दुर्बुद्धिर्विदुरं प्राह द्यूते किं जितमित्युत ॥ २४ ॥
तमेवं वादिनं राजा कुन्तीपुत्रो युधिष्ठिरः ।
उवाच वचनं धीमान् जोषमास्स्वेति भर्त्सयन् ॥ २५ ॥
अ० १२, अर्जुन उ०—भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे ।
धृतराष्ट्रस्तु राजर्षिः सर्वथा मानमर्हति ॥ १ ॥
न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि ।
असंभिन्नार्यमर्यादाः साधवः पुरुषोत्तमाः ॥ २ ॥
इति तस्य वचः श्रुत्वा फाल्गुनस्य महात्मनः ।
विदुरं प्राह धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ ३ ॥
इदं मद्वचनात् क्षत्तः कौरवं ब्रूहि पार्थिवम् ।
यावदिच्छति पुत्राणां श्राद्धं तावद्ददाम्यहम् ॥ ४ ॥
भीष्मादीनां च सर्वेषां सुहृदामाप्तकारिणाम् ।
मम कोशादिति विभो मा भूद्भीमः सुदुर्मनाः ॥ ५ ॥
वैश०—इत्युक्त्वा धर्मराजस्तमर्जुनं प्रत्यपूजयत् ।
भीमसेनः कटाक्षेण वीक्षाञ्चक्रे धनञ्जयम् ॥ ६ ॥
ततः स विदुरं धीमान् वाक्यमाह युधिष्ठिरः ।
भीमसेने न कोपं स नृपतिः कर्तुमर्हति ॥ ७ ॥
परिक्लिष्टो हि भीमोऽयं हिमवृष्ट्यातपादिभिः ।
दुःखैर्बहुविधैर्धीमानरण्ये विदितन्तव ॥ ८ ॥

भाषा

ऐसा कहते हुये भीम को भर्त्सना दे (धमका) कर राजा युधिष्ठिर ने कहा कि मौन रहो ॥२४॥२५॥

अ० १२, अर्जुन०—हे भीम ! आप मेरे ज्येष्ठ और गुरु हैं, इससे मैं अब अधिक नहीं कह सकता, परन्तु धृतराष्ट्र राजर्षि सर्वथा मान के योग्य हैं, क्योंकि ॥ १ ॥ आर्यों की मर्यादा रखने वाले उत्तम पुरुष अन्यकृत अपराधों को नहीं स्मरण करते किन्तु उपकारों ही को ॥ २ ॥ अर्जुन के इस वाक्य को सुन कर युधिष्ठिर ने विदुर से कहा कि आप जाकर राजा से इस मेरे वाक्य को कहिये कि हे विभो ! आप अपने पुत्रों और भीष्मादिकों को जितना श्राद्ध दिया चाहते हैं उतना धन मैं अपने कोष से देता हूँ । और भीमसेन विमना न हों अर्थात् उनका मन न दुखे ॥ ३—५ ॥

वैश०—ऐसा कह कर राजा युधिष्ठिर ने अर्जुन की प्रशंसा की और भीमसेन ने अर्जुन को कटाक्ष से देखा ॥ ६ ॥

तदनन्तर बुद्धिमान् युधिष्ठिर ने विदुर से यह कहा कि महाराज को भीमसेन पर कोप नहीं करना चाहिये क्योंकि आप जानते हैं कि वन में भीमसेन ने जाड़ा, पानी, घाम आदि के द्वारा बहुत ही दुःख पाया है ॥ ७ ॥ ८ ॥ किन्तु मेरे इस वचन को राजा से आप कहिये कि हे भरतर्षभ !

किन्तु मद्वचनाद्ब्रूहि राजानं भरतर्षभ ।
यद्यदिच्छसि यावच्च गृह्य तां मद्गृहादिति ॥ ९ ॥
यन्मात्सर्यमयं भीमः करोति भृशदुःखितः ।
न तन्मनसि कर्त्तव्यमिति वाच्यः स पार्थिवः ॥ १० ॥
यन्ममास्ति धनं किञ्चिदर्जुनस्य च वेश्मनि ।
तस्य स्वामी महाराज इति वाच्यः स पार्थिवः ॥ ११ ॥
ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्ययः ।
पुत्राणां सुहृदां चैव गच्छत्वानृण्यमद्य सः ॥ १२ ॥
इदं चापि शरीरं मे तवायत्तं जनाधिप ।
धनानि चेति विद्धि त्वं न च तत्रास्ति संशयः ॥ १३ ॥

अ० १३, वैश०—एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः ।
धृतराष्ट्रमुपेत्यैवं वाक्यमाह महार्थवत् ॥ १ ॥
उक्तो युधिष्ठिरो राजा भवद्वचनमादितः ।
स च संस्मृत्य वाक्यन्ते प्रशशंस महाद्युतिः ॥ २ ॥
बीभत्सुश्च महातेजा निवेदयति ते गृहान् ।
वसु यस्य गृहे यच्च प्राणानपि च केवलान् ॥ ३ ॥
धर्मराजश्च पुत्रस्ते राज्यं प्राणान् धनानि च ।
अनुजानाति राजर्षे यच्चान्यदपि किञ्चन ॥ ४ ॥
भीमस्तु सर्वदुःखानि संस्मृत्य बहुलान्युत ।
कृच्छ्रादिव महाबाहुरनुजज्ञे विनिःश्वसन् ॥ ५ ॥

भाषा

जो २ वस्तु जितनी २ आप चाहें मेरे गृह से लें ॥ ९ ॥ और यह भी कहिये कि पूर्व के अति दुःखि भीमसेन जो कुछ द्वेष से कहते हैं उसको मन में नहीं लाना चाहिये ॥ १० ॥ और यह भी कहि कि हमारे और अर्जुन के गृहों में जो कुछ धन है उसके स्वामी महाराज ( धृतराष्ट्र ) हैं ॥ ११ अपने यथेष्ट इस धन को ब्राह्मणों को दें और व्यय करें तथा पुत्रों और अन्यान्य मित्रों के ऋण छूटैं ॥ १२ ॥ और हे महाराज ! इसमें कुछ भी संशय नहीं है और इसको आप निश्चय करें यह मेरा शरीर और ये मेरे सब धन आप ही के हैं ॥ १३ ॥

अ० १३, वैश०—तदनन्तर विदुर ने धृतराष्ट्र के समीप आकर यह कहा कि ॥ १ ॥ युधिष्ठिर से आप की सब बातें कहा । सुन कर उन्होंने प्रशंसा किया ॥ २ ॥ अर्जुन भी अपने गृह, और प्राण को आपके सामने निवेदन करते हैं, तथा आप के पुत्र धर्मराज राज्य, प्राण तथा को और जो कुछ उनका है आप के लिये निवेदन करते हैं ॥ ३ ॥ ४ ॥ परन्तु भीमसेन ने उन दुःखों को स्मरण कर किसी रीति से अनुज्ञा दिया और धर्मशील राजा युधिष्ठिर तथा अर्जुन ने भी

स राजन् धर्मशीलेन राज्ञा बीभत्सुना तथा ।
अनुनीतो महाबाहुः सौहृदे स्थापितोऽपि च ॥ ६ ॥
न च मन्युस्त्वया कार्य इति त्वां प्राह धर्मराट् ।
संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरत् ॥ ७ ॥
एवं प्रायो हि धर्मोऽयं क्षत्रियाणां नराधिप ।
युद्धे क्षत्रियधर्मे च निरतोऽयं वृकोदरः ॥ ८ ॥
वृकोदरकृते चाहमर्जुनश्च पुनः पुनः ।
प्रसीद याचे नृपते भवान् प्रभुरिहास्ति यत् ॥ ६ ॥
तद्दातु भवान् वित्तं यावदिच्छसि पार्थिव ।
त्वमीश्वरोऽस्य राज्यस्य प्राणानामपि भारत ॥ १० ॥
ब्रह्मदेयाग्रहारांश्च पुत्राणामौर्ध्वदैहिकम् ।
इतो रत्नानि गाश्चैव दासीदासमजाविकम् ॥ ११ ॥
आनयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु ।
दीनान्धकृपणेभ्यश्च तत्र तत्र नृप त्वया ॥ १२ ॥
बह्वन्नरसपानाद्याः सभा विदुर कारय ।
गवां निपानान्यन्यच्च विविधं पुण्यकं कुरु ॥ १३ ॥
इति मामब्रवीद्राजा पार्थश्चैव धनञ्जयः ।
यदत्रानन्तरं कार्यं तद्भवान् वक्तुमर्हति ॥ १४ ॥

भाषा

का अनुनय किया और उनको अच्छे भाव पर स्थापित किया ॥ ५ ॥ ६ ॥ और धर्मराज ने आप से यह प्रार्थना किया है कि पूर्व वैर को स्मरण कर भीमसेन ने जो अन्याय से ऐसा आचरण किया है उस पर आप खेद वा क्रोध न करें क्योंकि भीमसेन युद्ध और क्षत्रिय धर्म को अपने स्वभाव ही से प्रधान समझते हैं और क्षत्रियों का ऐसा ही धर्म भी है ॥ ७ ॥ ८ ॥ भीमसेन के लिये हम और अर्जुन आप से पुनः पुनः प्रसाद माँगते हैं क्योंकि हे महाराज, आप हमारे प्रभु हैं ॥ ६ ॥

हे भारत ! आप हमारे इस राज्य तथा हमारे प्राणों के भी स्वामी हैं। इसलिये आप जितना चाहिये उतना धन व्यय कीजिये ॥ १० ॥ और मुझसे युधिष्ठिर ने यह भी कहा कि ब्राह्मणों के लिये पुरस्कार तथा पुत्रों के श्राद्ध में यहाँ से रत्न, गौ, दासी, दास सब मँगाकर कुरुराज ब्राह्मणों और दीन अन्ध कृपणों को दें ॥ ११ ॥ १२ ॥ और मुझसे यह भी कहा कि बहुत से अन्न, रस, पान आदि तथा बहुत सी सभाएँ और गौओं के लिये रसपान के स्थान आदि तुम बनवाओ ॥ १३ ॥ राजा और अर्जुन दोनों ने यही कहा कि जिसको मैंने आप से कह दिया अब इसके अनन्तर जो आपको करना हो सो कहिये ॥ १४ ॥

विष्णुधर्मोत्तरे—आतिवाहिकसंज्ञस्तु देहो भवति भार्गव।
केवलं तन्मनुष्याणां मृत्युकाल उपस्थिते॥ १ ॥
याम्यैर्नरैर्मनुष्याणां तत् शरीरं भृगूत्तम।
नीयते याम्यमार्गेण नान्येषां प्राणिनां द्विज॥ २ ॥
मनुष्याः प्रतिपद्यन्ते स्वर्गं नरकमेव वा।
नैवान्ये प्राणिनः केचित् सर्वे ते फलभोगिनः॥ ३ ॥
शुभानामशुभानां च कर्मणां भृगुनन्दन।
सञ्चयः क्रियते लोके मनुष्यैरेव केवलम्॥ ४ ॥
तस्मान्मनुष्यश्च मृतो यमलोकं प्रपद्यते।
नान्यः प्राणी महाभाग! फलयोनौ व्यवस्थितः॥ ५ ॥
याम्यलोकं प्रपन्नस्य पुरुषस्य तथा यमः।
योनीश्च नरकाँश्चैव निरूपयति कर्मणा॥ ६ ॥ इति।

(तथापि) यज्ञादिरूपधर्माङ्गत्वं जम्बूद्वीपेऽपि भारतस्यैव वर्षस्य। तथा च वीरमित्रोदये परिभाषाप्रकाशे कालाद्याहतुः शङ्खलिखितौ—

तत्र धर्मलक्षणानि देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति। समस्तेषु धर्मोदयः साधारणोऽन्यथा विपरीतः। श्रद्धापात्रसम्पन्नो धर्मः कालापेक्षः। श्रद्धा द्रव्योत्पत्तिरिति कालस्तन्मूलो देश इति।

अस्यार्थः—धर्मलक्षणानि धर्मनिमित्तानि। देशो ब्रह्मावर्त्तादिः। कालः संक्रान्त्यादिः।

भाषा

"आतिवाहिक०" हे भार्गव! आतिवाहिक नामक देह होता है, और वह केवल मनुष्यों हीं को मृत्युकाल के उपरान्त मिलता है न कि अन्य प्राणियों को, तथा उसी शरीर को यमराज के भृत्य यमपुरी को ले जाते हैं क्योंकि स्वर्ग वा नरक मनुष्य ही जाते हैं न कि कोई अन्य प्राणी, क्योंकि अन्य प्राणी धर्म वा अधर्म नहीं कर सकते किन्तु अपने मनुष्य शरीर से किये हुये धर्म और अधर्म के फल अर्थात् सुख और दुःख के भोग मात्र में अन्य प्राणी अधिकारी हैं। और केवल मनुष्य ही, धर्म और अधर्म के करने का अधिकारी है तथा अन्य प्राणियों की नाईं सुख दुःख भोगने का भी अधिकारी है। इसलिये मनुष्य ही मृत्यु के अनन्तर यमलोक जाता है न कि फलयोनि वाले कोई अन्य प्राणी। तात्पर्य्य यह है कि मनुष्ययोनि, साधनयोनि और फलयोनि दोनों है और पशु आदि योनि, केवल फलयोनि हीं हैं और यमलोक में उपस्थित मनुष्य के लिये यमराज उसके कर्म के अनुसार किसी योनि में जन्म अथवा नरक भोग देते हैं इति।

तथापि जम्बूद्वीप में भी भारतवर्ष ही यज्ञादि रूपी वर्णधर्म और आश्रम धर्म का अङ्ग अर्थात् उत्पादक है। इसके विषय में वीरमित्रोदय नामक ग्रन्थ के परिभाषा-प्रकाश-प्रकरण में पण्डित मित्रमिश्र ने जो व्याख्यान किया है उसको अब मैं ठीक २ उद्धृत करता हूँ। धर्म्म के उपयोगी काल आदि को शंख और लिखित महर्षियों ने यों कहा है कि "तत्र धर्म०" धर्म के कारण ये हैं। देश, ब्रह्मावर्त

उपाय इतिकर्त्तव्यता। द्रव्यं गवादि। श्रद्धा शास्त्रार्थे दृढप्रत्ययः। पात्रं विद्यातपोवृत्तसम्पन्नम्। त्यागः स्वस्वत्वनिवृत्तिपूर्वकः परस्वत्वोत्पत्तिफलको व्यापारविशेषः। समस्तेषु सत्सु धर्मोदयः विशिष्टदानधर्मफलोदयः। उपलक्षणमिदम्। अन्येष्वपि सर्वाङ्गसम्पन्नेष्वेव यागादिषु विशिष्टफलोदय इत्याह—साधारण इति। सर्वधर्मसाधारणोऽयं न्याय इत्यर्थः। अपरार्के साधारण इत्यस्यानन्तरं न्याय इत्यपि पाठो दृश्यते।

यज्ञवल्क्योऽपि—

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥ इति।

अन्यथा उक्तदेशाद्यभावे विपरीतः तादृशधर्मफलाजनकः। विशेषविहितदेशादि विनापि श्रद्धापात्रविशेषसम्पत्तिमात्रेण पूर्वोक्तात् न्यूनां धर्मसिद्धिमाह, श्रद्धापात्रसम्पन्नो धर्मः कालापेक्ष इति। श्रद्धापात्राभ्यामेव पूर्वोक्तकालातिरिक्तानिषिद्धकालसापेक्षाभ्यां धर्मः सम्पद्यते इति वाक्यार्थः। कालमेवाह, श्रद्धाद्रव्योत्पत्तिरितिकाल इति। यस्मिन्नेव काले श्रद्धा द्रव्यं च स एव कालोऽपेक्षणीय इत्यर्थः। एवं भूतकालसम्पन्नो यः कश्चनानिषिद्धो देशो धर्मस्य कारणमित्याह, तन्मूलो देश इति स प्रागुक्तकालो मूलं धर्मजनेन सहकारी यस्येत्यर्थः श्रद्धा पात्रद्रव्यसम्पत्तिरप्रतिषिद्धौ देशकालौ धर्मसम्पत्तिरिति समुदायार्थः तत्र देशो यथा—

मार्कण्डेयपुराणे—

भगवन् कथितस्त्वेष जम्बूद्वीपः समासतः।
यदेतद्भवता प्रोक्तं कर्म नान्यत्र पुण्यदम्॥ १॥
पापदं वा महाभाग वर्जयित्वा तु भारतम्।
इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते॥ २॥

भाषा

आदि। काल, संक्रान्ति आदि। उपाय, धर्म करने की प्रक्रिया। द्रव्य, गौ आदि। श्रद्धा, शास्त्र के वाक्यों पर दृढ़ विश्वास। पात्र, विद्या और तप से संयुक्त ब्राह्मण। ये सब कारण जब इकट्ठे होते हैं तब धर्म उत्पन्न होता है। यही न्याय सब धर्म्मों में है। और इनमें से यदि कोई कारण न रहे तो धर्म करने से भी उसका फल नहीं होता। जिस काल में श्रद्धा और द्रव्य सम्पत्ति हो वही काल धर्म का उत्पादक है किन्तु यदि वह काल शास्त्र से निषिद्ध न हो और उस काल से संयुक्त ऐसा देश जो कि शास्त्र से निषिद्ध न हो वह भी धर्म का प्रधानकारण है अर्थात् काल, देश का सहकारी है। तात्पर्य यह है कि श्रद्धा, पात्र और द्रव्य की सम्पत्ति तथा वे देश और काल जो कि शास्त्र निषिद्ध नहीं। ये इतने मिलित हो कर धर्म के कारण हैं। और इन धर्मकारणों में से देश रूपी कारण का विवेक मार्कण्डेयपुराण में कहा हुआ है कि—

"भगवन्०" हे भगवन्! यह जम्बूद्वीप का संक्षेप कहा गया जो कि आपने पूछा था और इस जम्बूद्वीप में भी भारतवर्ष को छोड़ अन्य प्रदेश कोई ऐसा नहीं है जो कि पुण्य और पाप दोनों के फल का उत्पादक हो। यहीं से स्वर्ग, मोक्ष, मध्य और अन्त सब प्राप्त होते हैं॥ १॥२॥

न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।
योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरम् ॥ ३ ॥
पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः ।
दक्षिणे मलयो यस्य हिमवानुत्तरे तथा ॥ ४ ॥
तदेवत् भारतं वर्षं सर्वबीजं द्विजोत्तम ।
ब्रह्मत्वममरेशत्वं देवत्वमपि दुर्लभम् ॥ ५ ॥
मृगपश्वोषधिवरायोनीस्तत्तदतोऽश्नुते ।
स्थावराणां च सर्वेषामतो ब्रह्मन् शुभाशुभे ॥ ६ ॥
प्रयान्ति कर्मभूर्ब्रह्मन्नान्यलोकेषु विद्यते ।
स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च वै तथा ॥ ७ ॥
देवानामपि विप्रर्षे सदैवैष मनोरथः ।
अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ ॥ ८ ॥
मनुष्यः कुरुते यत्तु तन्न शक्यं सुरासुरैः ॥

विष्णुपुराणे—उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ॥ १ ॥

तथा—अत्र जन्म सहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ।

भाषा

और भारतवर्ष से अन्यत्र किसी भूमि में मनुष्यों के लिये यज्ञादि का विधान नहीं है । जम्बूद्वीप उत्तर दक्षिण चार सहस्र कोस है जिसमें कि भारतवर्ष है । और भारतवर्ष के चारों अवधि ये हैं कि पूरब किरातदेश, पश्चिम यवनदेश, दक्षिण मलयपर्वत, उत्तर हिमवान् पर्वत । बहुत पूर्व समय में इस (वर्ष) का *'अजनाभ'* नाम था और जब से महाराज भरत के अधिकार में यह आया तब से भारत कहा जाता है ॥ ३ ॥ ४ ॥

हे द्विजोत्तम ! वह यह भारतवर्ष सबका बीज है अर्थात् ब्रह्मा, इन्द्र, देवता, मृग, पशु, ओषधी आदि योनि अपने २ कर्मानुसार यहाँ से होते हैं । अन्य प्रदेशों में कहीं यह सामर्थ्य नहीं है । स्वर्ग और मोक्ष मिलना तथा पुण्य और पाप दोनों का फल मिलना इसी भारतवर्ष के अधीन है न कि अन्य देश के ॥ ५—७ ॥ हे विप्रर्षे ! देवताओं के हृदय में भी यह इच्छा सदा ही बनी रहती है कि देवत्व से च्युत होने पर हम मनुष्य हों क्योंकि मनुष्य ऐसा काम करता है कि जो देवता और दैत्य नहीं कर सकते ॥ ८ ॥

*विष्णुपुराण में भी कहा है कि—*

"उत्तरं०" समुद्र के उत्तर और हिमवान् के दक्षिण भारतवर्ष है । जिसमें कि भरत महाराज का वंश है । हे सत्तम ! लाख जन्म लेते २ बड़े २ पुण्यों के अनुसार, कदाचित् जीव को इस भारतवर्ष

गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गस्य फलार्जनाय भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्माण्यसङ्कल्पिततत्फलानि सत्यस्य विष्णोः परमात्मरूपे।
अवाप्य तां कर्ममहीमनन्ते तस्मिंल्लयं ते त्वमलाः प्रयान्ति ॥

भविष्यपुराणे—

ब्रह्मावर्त्तः परो देश ऋषिदेशस्त्वनन्तरः।
मध्यदेशस्ततो न्यून आर्य्यावर्त्तस्त्वनन्तरः ॥

अनन्तर इत्यत्र नञ् ईषदर्थे, अनुदरा कन्येतिवत्। अन्तरशब्दो भेदवचनः भेदश्च वैलक्षण्यम् तच्च न्यूनतया। उत्तरोत्तरं न्यूनदेशस्यैवाभिधानात् यथा मध्यदेशस्ततो न्यून इति। तथा चेषन्न्यून इत्यर्थः।

मनुः—सरस्वतीदृषद्वत्योर्देवनद्योः यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥

अत्र देवपदं स्तुत्यर्थम्। अन्तरं मध्यम्—

अस्मिन्देशे य आचारः पारम्पर्य्यक्रमागतः।
वर्णानां सान्तरालानां सदाचारः स उच्यते ॥

परम्परैव पारम्पर्यम्। परम्पराक्रमेणानिदम्प्रथमतयाऽऽगतः। तेनाधुनिकाचारो वारितः। अन्तरालाः सङ्करजातयः। यद्यपि देशान्तरे सदाचाराः सन्ति, तस्मिन्नपि च देशेऽनुपनीतसहभोजनादयोऽनाचाराः परम्परागता बहवो दृश्यन्ते, तथापि सदाचारलक्षणे, नैतद्वाक्यस्य तात्पर्यम्, किन्तु तद्देशप्रशंसामात्र इति नान्यदेशाचारस्य प्रामाण्यमिति मेधातिथिः।

भाषा

में मनुष्य का जन्म मिलता है। स्वर्ग तथा मोक्ष जाने वालों के लिये यह भारतवर्ष ही एक उद्योग करने की भूमि है। देवताओं की ऐसी गीतें सुनी हैं कि भरतभूमि के लोग धन्य हैं जो कि देव शरीर के अन्त में स्वर्ग और मोक्ष के लिये भारतवर्ष जन्म लेकर परमेश्वर के ध्यान से परमेश्वर में लीन हो जाते हैं। भविष्यपुराण में यह कहा है कि—"ब्रह्मावर्त्त०" भारतवर्ष में अधिक पुण्यजनक ब्रह्मावर्त्त देश है। उससे न्यून ऋषिदेश, उससे न्यून मध्यदेश और उससे न्यून आर्य्यावर्त्त है। ब्रह्मावर्त्त आदि देशों का स्वरूप मनु ने कहा है कि—"सरस्वती०" सरस्वती और दृषद्वती पुण्य नदियों के बीच के देश को ब्रह्मावर्त्त कहते हैं।

"अस्मिन्०" इस ब्रह्मावर्त देश में चार वर्णों और वर्णसङ्करों में अनादि परम्परा से जो आचार चला आता है वह सदाचार कहलाता है। यहाँ पण्डित मेधातिथि ( मनुस्मृति के टीकाकार ) यह कहते हैं कि, यद्यपि अन्य देशों में भी सदाचार हैं तथा ब्रह्मावर्त में भी जिन लड़कों का यज्ञोपवीत नहीं हुआ है उनके साथ भोजन करना आदि अनेक दुराचार देखे जाते हैं तथापि मनु का यहाँ यह तात्पर्य्य नहीं है कि ब्रह्मावर्त ही के आचार सदाचार हैं अथवा ब्रह्मावर्त के सब आचार सदाचार ही हैं किन्तु ब्रह्मावर्त की प्रशंसामात्र में मनु का तात्पर्य्य है इसलिये अन्य देश के भी सदाचार प्रमाण हैं।

कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥
एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः ।
शूद्रस्तु यस्मिंस्तस्मिन् वा निवसेद्वृत्तिकर्षितः ॥

मत्स्याः विराटदेशः । पाञ्चालाः कान्यकुब्जादिदेशः । शूरसेनकाः मथुरादिदेशः । अनन्तरः ईषन्न्यूनः । अग्रजन्मनः ब्राह्मणस्य । एतद्देशप्रसूतस्येति वचनं देशप्रशंसापरम् तत्प्रकरणपाठात्, न तु तद्देशप्रसूतेभ्य एव धर्मशिक्षणनियमार्थम् । विनशनं सरस्वत्यन्तर्द्धानदेशः कुरुक्षेत्रदेशे प्रसिद्धः । यज्ञियो यज्ञार्हः । म्लेच्छदेशो यज्ञानर्हः । वृत्तिर्जीविका तया कर्षितः पीडितः वृत्त्या जीवनाभाववानित्यर्थः ।

वसिष्ठः—धर्म आर्यावर्ते प्रागदर्शनात्प्रत्यक्कालकावनादुदक् पारियात्राद्दक्षिणेन

भाषा

"कुरुक्षेत्र०" कुरुक्षेत्र मत्स्य (विराट्देश) पाञ्चाल कान्यकुब्ज आदि देश शूरसेन (मथुरा आदि देश) यही ऋषिदेश है जो कि ब्रह्मावर्त से कुछ न्यून है। "एतद्देश०" पृथ्वी में सब देशों के राजाओं को चाहिये कि इस देश के उत्पन्न ब्राह्मण से अपना २ चरित्र सीखें। यह इस देश की प्रशंसा है न कि इसका यह तात्पर्य्य है कि इसी देश के उत्पन्न ब्राह्मण से शिक्षा ले।

"हिमवद्०" मध्यदेश के चार अवधि ये हैं कि पूरब प्रयाग, पश्चिम विनशन ( कुरुक्षेत्र में जहाँ सरस्वती नदी गुप्त हुई हैं ), दक्षिण विन्ध्यपर्वत और उत्तर हिमवान् पर्वत। इन्हीं अवधियों के बीच के देश को मध्यदेश कहते हैं।

"आसमुद्रात्०" पूर्व और पश्चिम समुद्रों के तथा विन्ध्य और हिमवान् के बीच के देश को आर्य्यावर्त कहते हैं।

"कृष्णसार०" जिस देश में अनादि काल से कृष्णसार मृग स्वतन्त्र विहार करते हैं वह यज्ञ का देश है और उससे अन्य सब देश, म्लेच्छ देश अर्थात् यज्ञ करने के योग्य नहीं हैं। "एतान्०" ब्राह्मण आदि तीन वर्ण, इन उक्त पुण्य देशों ही में जिस रीति से हो वास करै और शूद्र तो यदि इन देशों में अपनी वृत्ति से जीवन न कर सकै तो अन्य देशों में भी वास कर सकता है।

वसिष्ठ महर्षि ने भी कहा है कि "धर्म आर्य्यावर्ते०" धर्म आर्य्यावर्त में है। अदर्शन देश से

हिमवत उत्तरेण विन्ध्यस्य धर्मा ये चाचारास्ते सर्वे प्रत्येतव्या न ह्यन्ये प्रतिलोमकक्ष-धर्माणः। एतमार्यावर्तमित्याचक्षते गङ्गायमुनयोरन्तराऽप्येके यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसम्। अथापि भाल्लविनो निदाने गाथामुदाहरन्ति।

पश्चात् सिन्धुर्वितरणी सूर्यस्योदयिनी पुनः।
यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसम्॥ इति॥

अस्मिंस्तु अदर्शनादयः शब्दाः पश्चात् सिन्धुरित्याद्युदाहृतश्रुत्युक्ततदेशपराः न ह्यन्ये। यतस्ते धर्माः प्रतिलोमकक्षधर्माणो विपरीताः अस्फुटस्वभावाः। कक्षशब्देन घनतृणावृतदेशवचनेनास्फुटता लक्ष्यते। पुनरार्य्यावर्त्तानुवादोऽन्वर्थसंज्ञाप्रदर्शनार्थः, आर्य्यास्त्रयो वर्णाः आवर्तन्ते यस्मिन्निति। ततश्चार्य्यैरत्रैव वस्तव्यम्। ब्रह्मवर्चसम् वृत्त-स्वाध्यायसम्पत्तिः। भाल्लविनः छन्दोगाः। निदानं छन्दोगसूत्रम्। सिन्धुः प्रसिद्धा। वितरणी जनकपर्वतसमीपे मालवदेशे परशुरामेण धनुष्कोटया कुण्डं भित्त्वा निर्मितेति जनप्रसिद्धा।

आदिपुराणे—कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमस्तथा।
समृद्धो धर्मदेशस्तमाश्रयेरन् विपश्चितः॥

शङ्खलिखितौ—देश आर्यो गुणवान् प्रागस्तादर्वागुदयाद्यावदुच्चा गिरयो यावत् पुण्याः सरितः प्राक् सिद्धत्वाद् देशः सनातनः पुण्यः। कृष्णमृगो वा यावद् विचरति ताव-दाचारः स्यात् प्राक् सिन्धुसौवीराद्दक्षिणेन हिमवतः पश्चात् काम्पिल्या उदक् पारियात्रा-दनवद्यं ब्रह्मवर्चसम् सर्वेषामतोऽन्यदेशकुलजातिधर्माणामन्वया इति।

भाषा

पूरब कालकावन से पश्चिम, विन्ध्यपर्वत से उत्तर, हिमवान् से दक्षिण, जो धर्म और आचार अनादि से हैं वे ही विश्वास के योग्य हैं न कि दूसरे; क्योंकि दूसरे धर्म, अधर्म से हिले मिले अर्थात् शुद्ध नहीं हैं। और यही देश आर्य्यावर्त है अर्थात् आर्य्य अर्थात् ब्राह्मणादि तीन वर्ण इसी में जन्म लेते हैं इसलिये इस देश का नाम आर्य्यावर्त है। इसी से ब्राह्मणादि तीन वर्णों को इसी देश में वास करना चाहिये। एक ऋषि का यह मत है कि गंगा और यमुना का मध्य ही आर्य्यावर्त है। सिद्धान्त यह है कि कृष्णसार मृग जिन देशों में अनादि काल से स्वतन्त्र विचरते हैं उतने ही देश, ब्राह्मणादि तीन वर्णों के वास और यज्ञादि धर्मों के योग्य अर्थात् पुण्य देश है न कि अन्य। वेद में भी कहा हुआ है "पश्चात् सिन्धु०" पश्चिम सिन्धु नदी से पूरब, वैतरणी नदी (मालव देश में जनक पर्वत के समीप धनु के कोण से कुण्ड को खोद कर परशुराम ने जिसे बनाया) तक पुण्य देश है अथवा कृष्णसार मृग जिन २ देशों में स्वतन्त्र विचरते हैं वहीं तक सब देश ब्राह्मणादि तीनों वर्णों के वास और यज्ञादि आदिधर्मों के योग्य अर्थात् पुण्य देश हैं न कि अन्य, आदिपुराण में भी कहा है कि—"कृष्णसारै०" कृष्णसार मृग यव, कुश चार वर्ण और चार आश्रम, जिन देशों में स्वाभाविक हैं बुद्धिमानों को उचित है कि उसी देश में वास करें।

शङ्ख और लिखित महर्षियों ने भी कहा है कि "देश आर्यो०" अस्ताचल से पूरब और उदयाचल से पश्चिम जिन २ देशों में ऊँचे २ पर्वत और पुण्य नदियाँ हैं वे देश सनातन से पुण्य

अनवद्यम् अविकल्पम्। धर्माणामेतद्देशधर्माणाम्। अन्वयाः सन्तानाः प्रत्येतव्या इति शेषः।

पैठीनसिः—आ हिमवतः आ च कुमार्याः सिन्धुर्वैतरणी नदी सूर्य्यस्योदयनं पुरः यावद् वा कृष्णमृगश्चरति तत्र धर्मश्चतुष्पादो भवति इति।

विष्णुः—चातुर्वर्ण्यव्यवस्थानं यत्र देशे न विद्यते।
तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम्॥

अन्ये तत्तत्कर्मणि पुण्यदेशास्तत्तत्प्रकाशे निरूपणीयाः।

## अथ निषिद्धदेशाः

बौधायनः—अनर्तकाङ्गमगधाः सुराष्ट्रा दक्षिणापथः।
उपावृत्सिन्धुसौवीरा एते सङ्कीर्णयोनयः॥

अर्वाक् कारस्करान् पाण्ड्यान् पुण्ड्रान् सौवीरान् वङ्गकलिङ्गप्रासूनानिति च गत्वा पुनस्तोमेन यजेत सर्वपृष्ठया वा। अथाप्युदाहरन्ति—

पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते।
ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः॥

अनर्तका द्वारका यस्मिन् देशे। अङ्गश्चम्पाप्रदेशः। अयं च निषेधस्तीर्थयात्रां विना।

तदुक्तम्—अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति॥

भाषा

और आर्य्य हैं अथवा कृष्णमृग जिन २ देशों में स्वाभाविक रहते हैं वे ही सब दे सनातन से पुण्यदेश और आर्य्यदेश हैं अर्थात् सिन्धु नदी से पूरब, हिमालय पर्वत से दक्षिण, काम्पिली से पश्चिम और पारियात्र पर्वत से उत्तर पुण्यदेश है। और इन्हीं देशों में वर्णधर्म और आश्रमधर्म हैं। पैठीनसि महर्षि ने भी कहा है कि—"आ हिमवतः०" हिमवान् पर्वत से कुमारी तक, और सिन्धु नदी से वैतरणी तक, तप, यज्ञ, दान रूपी धर्म अपने चारों चरणों से वास करता है। विष्णुमहर्षि ने कहा है कि—"चातुर्वर्ण्य०" जिस देश में ब्राह्मण, क्षत्रिय, वैश्य, शूद्र इन चारों वर्णों की व्यवस्था नहीं है उसको म्लेच्छदेश जानै और उससे अन्य देश आर्य्यावर्त है।

अब निषिद्ध अर्थात् अपवित्र देश कहे जाते हैं—

बोधायन महर्षि ने कहा है कि "अनर्तकाङ्ग०" अर्थात् (जिस देश में द्वारका है) अङ्ग (चम्पा प्रदेश), मगध, सुराष्ट्र, दक्षिणापथ, उपावृत, सिन्धु, सौवीर, इतने देश संकीर्ण योनि हैं। कारस्कर, पाण्डय, पुण्ड्र, सौवीर, वङ्ग, कलिङ्ग, प्रासून, इन देशों की यात्रा करने से पुनस्तोम अथवा सर्वपृष्ठ यज्ञ करने से शुद्ध होता है। ऋषि लोग कहते कि उसका प्रायश्चित्त वैश्वानर हवि है।

इन उक्त देशों में यात्रा करने का निषेध, उस यात्रा के विषय में है कि जो यात्रा, तीर्थयात्रा के बिना हो जैसे कि इस वाक्य में कहा है कि "अङ्ग वङ्ग०" अङ्ग, वङ्ग, कलिङ्ग, सौराष्ट्र, और

आदिपुराणे—आर्यावर्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः ।
कर्मदां सिन्धुपारं च करतोयां न लङ्घयेत् ॥
आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः ।
आज्ञां चैव तथा पित्रोरैन्दवेन विशुद्ध्यति ॥

कर्म द्यति इति व्युत्पत्या कर्मदा कर्मनाशा ।

मगधेषु विशेषमाह—कीकटेषु गया पुण्या नदी पुण्या पुनःपुनः ।
च्यवनस्याश्रमः पुण्यः पुण्यं राजगृहं वनम् ॥

कीकटो मगधदेशः ।

वायुपुराणे—त्रिशङ्कोर्वर्जयेद् देशं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन च कीकटान् ॥
देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः ।

आदिपुराणे—काञ्चिकोशलसौराष्ट्रदेशाः कर्णाटकच्छजाः ।
कावेरीकोल्वणोद्भूतास्ते देशा निन्दिता भृशम् ॥

कोल्वणः, त्र्यम्बकगिरिमध्यदेशः कोलवण इति प्रसिद्धः ।

पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ॥
आरट्टा नाम ते देशाः न तेष्वार्य्योऽन्वहं वसेत् ।
नर्मदासिन्धुकौशीनां पारं पञ्चस्य पश्चिमम् ॥

भाषा

मगध, देश में तीर्थयात्रा के विना यदि जाय तो वह पुनः यज्ञोपवीत संस्कार के योग्य हो जाता है। तथा आदिपुराण में भी कहा है कि "आर्य्यावर्त०" आर्य्यावर्त में उत्पन्न मनुष्य ब्राह्मण हो यदि वा अन्य वर्ण हो परन्तु कर्मनाशा, सिन्धु, करतोया, नदी के पार न जाय, तीर्थयात्रा के बिना आर्यावर्त से अन्यत्र जाकर अथवा—माता, पिता की आज्ञा को उल्लंघन कर द्विज, चान्द्रायण व्रत से शुद्ध होता है। मगध देश में यह विशेष कहा है कि—"कीकटेषु०" मगधदेश में गया, पुण्य है तथा "पुनः पुनः०" नदी, च्यवन ऋषि का आश्रम और राजगृह नामक वन पुण्य है।

वायु पुराण में कहा है कि "त्रिशङ्को०" महानदी से उत्तर और मगध देश से दक्षिण, पूरब, पश्चिम ४८ कोस तक त्रिशङ्कुदेश ( आकाश में अधोमुख टँगे हुये राजा त्रिशङ्कु के लिये विश्वामित्र ने जो स्वर्गलोक अधूरा बना कर छोड़ा उसकी छाया में पड़ा हुआ देश ) है। श्राद्ध के लिये निंदित है और उस देश में न जाय। आदिपुराण में कहा है कि "काञ्चिकोशल०" काञ्चि कोशल, सौराष्ट्र, कर्णाटक, कच्छ, कावेरी और कोल्वण ( त्र्यम्बक पर्वत का मध्यदेश जिसको कोलवण कहते हैं ) ये देश बहुत निन्दित हैं।

"पञ्चनद्यो०" शतद्रू, सतलज, विपाशा ( व्यासा ), इरावती (रावी), चन्द्रभागा ( चनाव ) वितस्ता ( झेलम ) ये पाँच नदियाँ पर्वतों से निकल कर जिन देशों में बहती हैं वे देश "पञ्जाब" आरट्ट कहलाते हैं। इन देशों में त्रैवर्णिक, अधिक दिन तक वास न करै। नर्मदा, सिन्धु के पार

गत्वा नरकमाप्नोति तीर्थकालाधिकं वसन् ॥

पारं मध्यभागात्परभागः। पश्चस्य पुष्करस्य।

अङ्गवङ्गकलिङ्गान्ध्रमद्रमालविकास्तथा।
नर्मदादक्षिणे यच्च सिन्धोरुत्तर एव च॥
पौण्ड्रश्चैव सुराष्ट्रश्च वैन्ध्यमागधकाः खशाः।
न विवाहं तथा श्राद्धं यज्ञं तेषु समाचरेत्॥
पापदेशाश्च ये केचिद् व्याधैरध्युषिता जनैः।
गत्वा देशानपुण्यांस्तु कृच्छ्रं पापं समश्नुते॥

कृष्णसारादिरहितदेशाभिप्रायमिदमिति स्मृतिचन्द्रिकाकारः।

व्यासः—देशान् शूद्रजनाक्रान्तानधार्मिकजनावृतान्।
म्लेच्छावृतान् प्रयत्नेन वर्जयेद्धार्मिको द्विजः।

श्रुतिरपि—"तस्मान्न जनमियान्नान्तमियादिति"। जनं अन्त्यजम्। क्वचित्प्रतिप्रसवः, स्कान्दे—

अङ्गवङ्गकलिङ्गाँश्च पर्वताँश्च खशाँस्तथा।
सिन्धुसौवीरसौराष्ट्रान् पारदानान्ध्रमालवान्॥
विवाहने द्विजो नित्यमनापदि विवर्जयेत्।
एतानप्यापदि गृही संश्रयेद्वृत्तिकर्षितः॥

पितामहः—शूद्रराज्येऽपि निवसेद्यत्र मध्ये तु जाह्नवी।
सोऽपि पुण्यतमो देशोऽनार्यैरपि समाश्रितः॥

भाषा

और पुष्कर तीर्थ से पश्चिम जाकर तीर्थ के काल से अधिक रहने वाला नरक पाता है। अङ्ग, बङ्ग, कलिङ्ग, अन्ध्र, मद्र, मालविक और नर्मदा के दक्षिण देश तथा सिन्धु के उत्तर देश, पौण्ड्र, सुराष्ट्र, विन्ध्यदेश, मागध, खश, इन देशों में पुण्यदेशवासी मनुष्य विवाह, श्राद्ध और यज्ञ न करै। हिंसा करने वाले मनुष्यों से भरे हुए और भी जो देश हैं उनमें जाने से मनुष्य को पाप होता है। व्यास ने कहा है कि "देशान्०" जिन देशों में शूद्र और पापी अधिक हैं अथवा म्लेच्छ भरे हुये हैं, धार्मिक द्विज उन देशों में न जाय। वेद में भी कहा है कि "तस्मान्न०" म्लेच्छ जनों से संभाषण आदि न करै। म्लेच्छ देशों में न जाय।

अङ्ग, बङ्ग आदि देशों के विषय में कुछ निर्वाह, स्कन्दपुराण में कहा है कि "अङ्ग, वङ्ग०" अङ्ग, वङ्ग, कलिङ्ग, निन्दित पर्वत, खश, सिन्धु, सौवीर, सौराष्ट्र, पारद, अन्ध्र, मालव, इन देशों में किसी आपत्ति के बिना, अन्य देशवासी द्विज कदापि न विवाह करैं परन्तु यदि आपत्ति में पड़ा और जीविका रहित हो तो इन देशों का भी आश्रयण कर सकता है। पितामह (ब्रह्मा) ने कहा है कि—"शूद्रराज्येऽपि०" त्रैवर्णिक, उस शूद्र राज्य में भी वास करै जिसके बीच गङ्गा गई हों

कुरुक्षेत्रनिवासेन वाराणस्यां च मानवः।
अहिंसकः स्नानरतः पापं हित्वा दिवं व्रजेत्॥
न गङ्गया विना वासः सर्वक्षत्रक्षयादृते।
काश्यां तु मरणं श्रेष्ठं विना क्षेत्रं प्रजापतेः॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे।
निवासो न विना पुण्यैर्नराणामिह जायते॥

सर्वक्षत्रक्षयो नाम कुरुक्षेत्रम्। कुरुक्षेत्रादन्यत्र गङ्गया विना निवासः श्रेष्ठः। प्रयाग-दन्यत्र काश्यां मरणं श्रेष्ठम्।

व्यासः—ते देशास्ते जनपदास्ते शैलास्ते तथाऽऽश्रमाः।
पुण्या त्रिपथगा येषां मध्ये याति सरिद्वरा॥

विष्णुधर्मोत्तरे—प्रभासे पुष्करे काश्यां नैमिषेऽमरकण्टके।
गङ्गायां सरयूतीरे निवसेद्धार्मिको जनः॥ इति॥

अत्र च वीरमित्रोदयप्रकरणे वसिष्ठोद्धृतया "पश्चात् सिन्धुर्वितरणी" ति श्रुत्याऽऽर्या-वर्तं लक्षयित्वा तस्य पुण्यदेशतां म्लेच्छानां तद्देशानां चागम्यतां प्रतिपादयन्त्या मित्रमिश्रो-द्धृतया "तस्मान्न जनमियान्नान्तमियादिति" बृहदारण्यकोपनिषच्छ्रुत्या आर्यम्लेच्छदेशयो-र्विभागो गुणदोषौ च दर्शिताः। शङ्खलिखितयोः स्मृतौ च देश एव प्रथमं धर्मनिमित्तत्वे-नोक्तः। "तन्मूलो देश" इत्यनेन च देशस्य कालः सहकारित्वेनोक्तः एवं च देशविशे-

भाषा

क्योंकि म्लेच्छों से भरा हुआ भी वह देश, गंगा के कारण बड़ा पुण्य देश है। कुरुक्षेत्र और काशी में हिंसा न कर स्नानरत हो वास करने से मनुष्य अन्त में ऊर्ध्व गति को जाता है। गंगा के विना यदि कहीं वास अच्छा है तो कुरुक्षेत्र ही में और प्रयाग के विना, काशी ही में मरण श्रेष्ठ है हरिद्वार, प्रयाग और गंगासागर में उन्हीं मनुष्यों का वास होता है कि जिनके पूर्व पुण्य अधिक हैं। (ये पाँच श्लोक उसी लक्षणाध्यायी पितामहस्मृति के हैं जिसका वर्णन "वेददुर्गसज्जन" वेदमहत्त्व प्रकरण में पूर्व ही हो चुका है और वह पितामह-स्मृति बहुत दिनों से लुप्त है)। व्यास ने भी कहा है कि "ते देशा०" जिनके मध्य में, सब नदियों से श्रेष्ठ गंगा जाती हैं वे ही देश, देश हैं, वे ही पर्वत, पर्वत हैं, वे ही आश्रम, आश्रम हैं। विष्णुधर्मोत्तर पुराण में कहा है कि—"प्रभासे०" धार्मिक मनुष्य, प्रभास, पुष्कर, काशी, नैमिष, अमरकण्टक, गंगातीर वा सरयूतीर में वास करै। इति।

यहाँ तक इस उद्धृत वीरमित्रोदय में कही हुई, वसिष्ठ महर्षि की उद्धृत की हुई "पश्चात् सिन्धुर्वितरणी०" इस श्रुति से आर्य्यावर्त देश का यज्ञादि वर्णाश्रमधर्म के प्रति, योग्यता सिद्ध है ऐसे ही पण्डित मित्रमिश्र की उद्धृत "तस्मात्०" इस श्रुति से म्लेच्छ देशों की अगम्यता भी सिद्ध है तथा शंख और लिखित महर्षियों की भी "तन्मूलो देशः" इस पूर्वोद्धृत स्मृति से यह सिद्ध है कि धर्म करने में देश प्रधान कारण है। इस प्रकार से यह बात सिद्ध हो गई कि देश में कोई एक विशेष अवश्य होता है कि उसके कारण वह देश धर्म का उत्पादक होता है और उस विशेष के

निष्ठः कश्चिदतिशयो धर्मजनकतावच्छेदकतया शास्त्रगम्योऽवश्यमस्तीति स्पष्टमेव लभ्यते। शास्त्रं च "वर्जयित्वा तु भारतम्" इत्युपक्रम्य "भूमौ कर्म विधीयत" इत्यन्तं सपादपद्यम् मार्कण्डेयपुराणीयम् भारतभूमौ तादृशमतिशयं बोधयति। अत्र हि कर्मपदं वर्णाश्रमधर्मपरमेव। तस्य धर्माधर्मोभयपरत्वस्वीकारे "इतः स्वर्गश्च मोक्षश्च" इत्यनेन विरोधापत्तेः। न हि स्वर्गमोक्षावधर्माद्भवतः। एवं च भारतारिक्ते जम्बूद्वीपविभागे वर्णाश्रमधर्मप्रयोजकतावच्छेदकः शास्त्रीयोऽतिशयो नास्त्येवेति "वर्जयित्वा तु भारतम्" इत्यनेन स्पष्टमेवोच्यते। तादृशातिशयप्रमापकश्च सम्प्रत्यपि भारतवर्षे प्रत्यक्षः सोमलताप्ररोहः। अत एव "तृतीयस्यामितो दिवि सोम आसीत्" इति द्युलोकावस्थितिमहाविभूतिः सोमवल्लीद्युस्थानप्रतिनिधितया भारते वर्षे यज्ञनिष्पादनायावतारिता विश्वसृजा तथा—"यदि सोमं न विन्देत्तर्हि पूतीकानभिषुणुयात्" इति श्रुतसोमाभावे तत्प्रतिनिधित्वेन विहितानां पूतीकानां प्ररोहोऽपि। न च सोमपूतीकाद्या अलौकिका लताविशेषा भारतीमिमां भूमिं जहति, न वा क्वचिदपि खण्डान्तरे कदाचिदप्यासन् सन्ति वा। एवम्—कृष्णसारकुरङ्गस्वैरविहारो यवदर्भप्ररोहः चातुर्वर्ण्यम् चातुराश्रम्यं चेति भारतवर्षमात्रविश्रान्तः सर्वलोकप्रत्यक्षोऽर्थपरिकरः "कृष्णसारैर्यवैर्दर्भैः" इति पूर्वोक्तेनादिपुराणवाक्येन प्रतिपादितोऽनादिपरम्परायातोऽद्य यावदपि जागर्त्येव। तथा च भारतभूमिः सामान्यविशेषोभयधर्मभूमिः तदन्या तु जम्बूद्वीपभूमिरपि न यज्ञादिरूपवेदविहितवर्णाश्रमधर्मभूमिः। सत्यादिरूपसाधारणधर्मभूमित्वन्तु तत्रापीति विवेकः। अस्मिंश्च देशिके

भाषा

होने से दूसरे देश धर्म के उत्पादक नहीं हैं तथा वह विशेष, केवल शास्त्ररूपी चक्षु से देख पड़ता हैं न कि चर्मचक्षु से। और ठीक भी यही है, क्योंकि जब "धर्मराजसज्जन" और "वेददुर्गसज्जन" में कहे हुये दुर्भेद्य प्रमाणों के अनुसार धर्म, केवल शास्त्रचक्षु से गम्य है तब धर्म के उत्पादक देशों में उक्त विशेष कैसे चर्मचक्षु से गम्य हो सकता है? और पूर्वोद्धृत "वर्जयित्वा तु भारतम्" से "भूमौ कर्म विधीयते" तक सपाद श्लोक मार्कण्डेयपुराण रूपी स्मृति से भी भारत भूमि में अनन्तरोक्त विशेष सिद्ध है और इससे यह भी सिद्ध है कि वह शास्त्रीय विशेष, भारत से अन्य देश में नहीं है। तथा "तृतीयस्यामितो दिवि सोम आसीत्" (जगत् सृष्टि के अनन्तर सोमलता यहाँ से तीसरे अर्थात् स्वर्ग लोक में सोमलता रहती है अर्थात् सोमलता की सृष्टि द्युलोक ही में होती है) इस श्रुति से स्पष्ट ही यह निश्चित है कि ब्रह्मदेव यज्ञों के लिये पश्चात् भारत वर्ष में उतारते हैं। और "यदि न सोमं विन्देत पूतीकानभिषुणुयात्" (यदि सोम न मिले तो उसके स्थान पर पूतीक नामक तृणों को काम में लावै)। इस श्रुति में सोम का प्रतिनिधि पूतीक विधान किया हुआ है। इसलिये यह प्रत्यक्ष उदाहरण है कि ये सोम और पूतीक तथा ऐसी २ अन्यान्य अलौकिक लतायें इस भारतभूमि में ही होती आती हैं और इससे अन्य किसी भूमि में न कभी हुई न होती हैं। ऐसे ही "कृष्णसारै०" इस पूर्वोद्धृत आदिपुराण के वाक्य से, उक्त शास्त्रीय विशेष के, लोकप्रसिद्ध और प्रत्यक्ष कृष्णसार मृग का विहरण यव, कुश, चार वर्ण, चार आश्रम, रूपी अनेक चिह्न, भारतभूमि में दिखलाये गये हैं जो कि अनादि काल से इसी भूमि पर होते आते हैं और अन्य भूमि में कदापि

धर्मप्रयोजकतावच्छेदकेऽतिशयेऽनेकजातीयत्वम् स्वर्गतदतिरिक्तानेकविधनानाफलगताना वैजात्यानां मोक्षगतस्य च वैजात्यस्य देशविशेषप्रयोज्यतावच्छेदकतायाः प्रयोज्यप्रयो जकभावे व्यभिचारवारणयावश्याश्रयणीयतया तत्तद्वैजात्यावच्छिन्नप्रयोज्यतानिरूपित प्रयोजकतावच्छेदकतया शास्त्रीयतत्तद्वाक्यबोधितानां तत्तद्देशविशेषावस्थितानामतिश यानां तारतम्यस्यावश्यकल्पनीयत्वात्। भारतेऽपि च यत्र यत्र स्तोकायासकृतमपि क भूयस्तरशुभाशुभापूर्वजनकं तदेव तीर्थमुच्यते अत एव तेषु क्षेत्रत्वव्यवहारः। लोके हि क्षेत्रशब्देन सा कृष्टा भूमिरुच्यते यत्र स्तोकेष्वेव यवगोधूमशाल्यादिबीजेषूप्तेषु महान्तो यवादिराशय उत्पद्यन्ते। केदारन्यायसिद्धश्चायमर्थः। तथा च ब्रह्मवैवर्तेऽखिले काशीमूल रहस्ये काशीकेदारमाहात्म्येऽष्टाविंशे अध्याये—

केदारनाम जगति सस्योत्पादनभूमिषु।
प्रसिद्धं तत्कथं त्वत्र शिवक्षेत्रोपपादितम् ॥८९॥ इति सूतप्रश्नः।

तत्रैवोनविंशेऽध्याये—

धर्मार्थकाममोक्षाणां काश्यां केदारभूमिका।
सस्यवृद्धिकरी जाता विश्वेशनगरी बलात् ॥३४॥

इति व्यासोक्तमुत्तरं च।

भाषा

नहीं हुए, न होते हैं और न होंगे। तथा इस पर भी ध्यान देना चाहिये कि ये सोम आदि गिने हुए चिह्न सब के सब ही यज्ञादि रूपी वर्णाश्रम धर्मों के उपयोगी हैं। इससे यह विशे बहुत ही स्पष्ट हो गया कि भारत-भूमि सामान्यधर्म और विशेषधर्म दोनों की जन्म-भूमि है और उससे अतिरिक्त जम्बूद्वीप, वा अन्य द्वीप की भूमि यज्ञादि रूपी विशेष धर्म्मों की जन्म भूमि नहीं है और सत्यभाषण आदि साधारण धर्मों की जन्म-भूमि तो सभी हैं। और यह भारत-भूमि का शास्त्रीय विशेष अनन्त प्रकार का है क्योंकि यज्ञादि धर्म, कर्म और उनके सुख रूपी फल भी अनन्त प्रकार के होते हैं तो उनका सहकारी उक्त शास्त्रीय विशेष भी कैसे एक प्रकार का हो सकता है? तथा इस भारत-भूमि के जिस २ प्रदेश में थोड़े से परिश्रम और व्यय का धर्म करने से, अन्य भारत प्रदेश की अपेक्षा बहुत अधिक सुख रूपी फल, और पाप करने से बहुत अधिक दुःख रूपी फल, धर्म और अधर्म के कर्त्ता को मिलता है उन्हीं सब प्रदेशों को तीर्थ और क्षेत्र भी कहते हैं। क्योंकि लोक में 'क्षेत्र' उस जोती हुई भूमि को कहते हैं कि जिसमें यव, गेहूं आदि थोड़े से बीजों के बो देने से उनके बड़े २ राशि उत्पन्न होते हैं। यह विषय उक्त रीति से अनुभव सिद्ध तो है ही परन्तु "केदार" इस शब्द के दृष्टान्त से भी सिद्ध है क्योंकि "केदार नाम०" अर्थात् सूत का यह प्रश्न है कि लोक में, यव, गोधूम आदि सस्य जिस भूमि में उत्पन्न होते। उसको केदार (क्यारी) कहते हैं "ऐसी दशा में इस शिवक्षेत्र का कैसे "केदार, नाम है? और व्यासकृत उत्तर यह है कि "धर्मार्थकाम०" अर्थात् विश्वनाथपुरी के माहात्म्य से काशी के इस प्रदेश में अर्थ, धर्म, काम और मोक्ष रूपी सस्यों की अधिक वृद्धि होती है। इससे इसका केदार

लौकिकक्षेत्रेभ्यश्च शास्त्रीयक्षेत्राणां, लौकिककर्मभ्यः शास्त्रीयकर्मणामिवैतावानेव विशेषः—यदेकत्र दृष्टान्येव फलान्यन्यत्र त्वदृष्टानि दृष्टानि चेति। यथा च यव्येषु क्षेत्रेषु सुप्ता अपि शालयो न फलन्ति तथैव स्वर्गापवर्गादि तत्तत् फलजनकतया प्रतिपादितेषु तत्तत्तीर्थेषु कृतान्यपि धर्मकर्माणि न फलान्तरं प्रसुवते। किं च विस्तरभयादिहानुपन्यस्यमानेषु परःशतेषु स्कान्दादिवाक्येषूक्तानां तीर्थचिह्नानां बदरीकूर्मधाराकेदाररेतःकुण्डप्रभृतिसम्भृतानां संवावदूका अनन्यथासिद्धाः साक्षात्कारिणः प्रत्यया नैव साहसमात्रेण प्रामाण्यात् प्रच्यावयितुं शक्यन्ते।

किं बहुना यत्र प्रत्यन्तवासिनामपि मक्कादिषु देशविशेषेषु तदीयाः शास्त्रीया अतिशया अद्यापि तेषु प्रसिद्धिमनुभवन्ति।

भाषा

नाम है। और (जैसे) भोजन, शयन आदि लौकिक कर्मों की अपेक्षा यज्ञादि कर्मों में इतना ही विशेष है कि लौकिक कर्मों से इस लोक में तृप्ति आदि दृष्ट ही फलों का लाभ होता है परन्तु यज्ञादि शास्त्रीय कर्मों से इस लोक में पुत्र, पशु आदि दृष्ट फलों का और परलोक में स्वर्ग सुख आदि अदृष्ट फलों का भी लाभ होता है (वैसे) लौकिक क्षेत्रों की अपेक्षा शास्त्रीय क्षेत्रों में भी यह विशेष है कि लौकिक क्षेत्रों से यव, गेहूँ आदि दृष्ट ही पदार्थों का लाभ होता है परन्तु शास्त्रीय क्षेत्रों से पुत्र, पशु आदि दृष्ट फलों और स्वर्गादि अदृष्ट फलों का भी लाभ होता है। तथा जैसे यव के क्षेत्र में यदि शाली बोई जाय तो वह फल नहीं देती किन्तु यदि यव बोये जायँ तभी फल का लाभ होता है वैसे ही जिस २ शास्त्रीय क्षेत्र में जो २ काम करने से जो २ विशेष फल शास्त्र में कहा हुआ है उसी तीर्थ में उसी काम से वही फल होता है न कि अणुमात्र भी उससे विपरीत।

विस्तार के भय से यहाँ नहीं लिखे जाते हुए पौराणिक और ऐतिहासिक वाक्यों में कहे हुए प्रसिद्ध २ तीर्थचिह्नों के प्रत्यक्षानुभव भी अद्यावधि ऐसे चले आते हैं कि जिनके देखने से तीर्थनास्तिक्य बहुत दूर भाग जाता है जैसे बदरी क्षेत्र के नारायण मन्दिर में गीली लकड़ी से प्रसाद बनता है और अग्नि को प्रज्वलित करने के लिये कूर्म धारा का जल अग्नि पर छोड़ा जाता है परन्तु उस स्थान से अन्यत्र उसी जल से अन्य जलों की नाईं अग्नि बुझ जाती है। तथा रेतस् कुण्ड में समीप से 'बं' शब्द जै वार कहा जाय तै वार शिवलिङ्गाकार महाबुद्बुद का कुण्ड जल से प्रादुर्भाव होता है और काशीपुरी मात्र में तड़ाग जल के तुल्य गङ्गा जी वेगशून्य हैं ऐसे ही अनेक क्षेत्रों में शतशःविशेष अनुभव सिद्ध हैं। और देश का विशेष यहाँ तक लोक प्रसिद्ध है कि वेदबाह्य लोग भी "मक्का, मदीना" आदि देशों के अनुसरण में अपने २ शास्त्रीय विशेषों के अनुसार अधिक परिश्रम और व्यय करते हुए अब भी देखे जाते हैं। और जिन लोगों के मत में कोई तीर्थ नहीं है वे भी नियम से गिर्जा आदि में जाकर अपने दिन की रोटी (प्रेयर) आदि माँगते हैं न कि अन्य प्रदेशों में। अब विचार करना चाहिए कि गिर्जा आदि में क्या विशेष प्रत्यक्ष है! कि जिससे वहीं वे लोग 'प्रेयर' आदि करते हैं और निर्णय यही है कि जिस स्थान में बहुत दिनों से प्रेयर आदि कर्म हीं होते हैं वह देश पवित्र हो जाता है अर्थात् उस देश में उनके शास्त्र के अनुसार ऐसा विशेष उत्पन्न हो जाता है कि जिसके

अथात्र श्रौतः परिकरः—

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्यासुषोमया" ( ऋ० मं० १ अ० ३ सू० ७५ मं० ५ )

अत्र सायणः—अत्र प्रधानभूताः सप्त नद्यः तदवयवभूतास्तिस्रः स्तूयन्ते—हे गङ्गे! हे यमुने! हे सरस्वति! हे शुतुद्रि! हे परुष्णि! हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे वितस्तया सोमया च सहिते आर्जीकीये त्वं चैवं सप्त नद्यो यूयं मे स्तोमं स्तोत्रं अस्मदीयं आसचत आसेवध्वं शृणुहि शृणुत च। आर्जीकीयाया वितस्तया सुषोमया च साहित्ये निरुक्ते उक्तम्—वितस्तया चार्जीकीय अशृणुहि सुषोमया चेति। अत्र गङ्गागमनादित्यादि निरुक्तं द्रष्टव्यम्॥ ५॥

तत्रैव—अभि त्वा सिन्धो शिशुमिन्नमातरो वाश्रा अर्षंति पयसेव धेनवः।
राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि॥ मं० ४॥

सायणः—हे सिन्धो त्वा त्वां शिशुमिन्नमातरः मातरः पुत्रमिव वाश्राः शब्दयन्त्यः इतरा नद्यः अभ्यर्षन्ति अभिगच्छन्ति पयसेव धेनवः पयसा युक्ता नवप्रसूतिका गाव इव। किं च युध्वा युद्धकृद्राजेव त्वरित् त्वमेव सिचौ सिच्यमानौ भटौ नयसि यत् यदा आसां प्रवतां त्वया सह गच्छन्तीनां अग्रं अग्रे इनक्षसि व्याप्नोषि सर्वासां पुरो गच्छसि॥ ४॥

तत्रैव—तृष्टा मया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्यात्या।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे॥ ६॥

भाषा

कारण वहीं किये हुए 'प्रेयर' आदि से अन्य प्रदेशों की आपेक्षा अधिक फल होता है। और यह विशेष मद्यगृह और द्यूतगृह आदि में नहीं रहता बल्कि उसके विरुद्ध दुष्टविशेष इन गृहों में रहता है इसके कारण ये गृह उनकी दृष्टि में भी निषिद्ध हैं। इसी से इन गृहों में वे लोग प्रेयर आदि नहीं करते। अब ध्यान देना चाहिये कि बहुत थोड़े दिनों से जहाँ २ अच्छे काम किये जाते हैं वहाँ भी यदि कुछ विशेष हो जाता है, तो इन तीर्थों में उक्त शास्त्रीय विशेष क्यों न हों? क्योंकि इन तीर्थों में अनादि काल से वेद रूपी महाप्रमाण के अनुसार तप और अश्वमेध आदि महा २ पुण्यों को अब तक महात्मा करते आते हैं। यहाँ तक उक्त रीति से यह सिद्ध हो गया कि लोकानुभव के अनुसार भी इन तीर्थों का अनुसरण करना बहुत ही आवश्यक है और इसके ऊपर नास्तिकों का आक्षेप अणुमात्र भी सत्य नहीं है किन्तु मिथ्या ही है।

अब तीर्थों के विषय में विशेष रूप से वैदिकप्रमाण दिया जाता है तत्रापि प्रथम जलतीर्थों में—

"इमं मे०" हे गङ्गे! हे यमुने! हे सरस्वति! हे परुष्णि! हे असिक्नि से गर्भित मरुद्वृधे! तथा हे वितस्ता और सुषोमा से गर्भित आर्जीकिये! तुम सात नदियाँ, मेरे पढ़े हुए स्तोत्र की सेवा करो और सुनो भी।

"अभि त्वा०" हे सिन्धो! जैसे माता पुत्र के अभिमुख जाती है वैसे ही क्षीरयुक्त धेनु गौ के सदृश अन्य नदियाँ तुम्हारे अभिमुख जाती हैं। और युद्ध करने वाले राजा के तुल्य तुम्हीं अपने इन

सायणः—हे सिन्धो त्वं क्रुमुं क्रमणीयां गोमतीं नदीं यातवे प्रतियातुं पर्वतादवरूढा प्रथमं तृष्टा मया नद्या सजूः सङ्गतासि पश्चात् सुसर्त्वा रसया श्वेत्यात्या क्रुभया मेहत्न्वा च सह सजूर्भव याभिस्त्वं सरथं समानं रथमारुह्य ईयसे गच्छसि ॥ ६ ॥

सिन्धुगङ्गाप्रभृतयश्च जलप्रवाहरूपा नद्यः स्वस्वाधिष्ठात्रीणां सिन्धुगङ्गाप्रभृतीनामिन्द्रादिवद्विग्रहवतीनां नाम्नैव लोके प्रसिद्धास्तीर्थभूयमनुभवन्ति । तदधिष्ठात्र्यस्तु सिन्धुगङ्गाप्रभृतयो देवतास्तु ताभ्योऽन्या एव अधिष्ठात्रधिष्ठेययोश्चाभेदमारोप्यैव सिन्धुगङ्गाप्रभृतिषु नदीषु सिन्धुरियं गङ्गेयमिति लौकिको व्यवहारः ।

तथा च मन्त्रौ तत्रैव—स्वश्वा सिन्धुः सुरथा सुवासा हिरण्मयी सुकृता वाजिनीवती ।
ऊर्णावती युवतिः सीलमावत्युताधिवस्ते सुभगामधुवृधम् ॥ ८ ॥
सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।
महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥ ९ ॥

सायणः—सेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवसना हिरण्मयी हिरण्मयाभरणा सुकृता वाजिनीवती अन्नवती ऊर्णावती तस्याः समीपे देशे सन्त्यूर्णाः यासां रोमभिः कम्बलाः क्रियन्ते युवतिर्नित्यतरुणी सर्वदा अहीनोदका सीलमावती सीराणि पयौषध्या रज्जुभूतया बध्यन्ते सा सीलमेति निगद्यते कृषीवलैः । तादृगोषध्योपेता उतापि च सुभगा सिन्धुर्मधुवृधं मधुवर्धकं निर्गुंड्यादिकं अधिवस्ते आच्छादयति तस्यास्तीरे निर्गुंड्यादीनि बहूनि सन्ति ॥ ८ ॥

भाषा

उधर के तीर रूपी वीरों को जल से ले जाती हो । तुम्हारे साथ बहती हुई अन्य नदियों के आगे तुम चलती हो । "तृष्टामया०" हे सिन्धो ! तुम जाने योग्य 'गोमती' नदी से मिलने के लिये पर्वत से निकल कर 'तृष्टामा' नदी से मिली हो पश्चात् 'सुसर्तू' रसा, श्वेत्याती, कुभा, महेलू, नामक नदियों के साथ कि जिनके साथ एक रथ पर तुम चलती हो ।

सिन्धु, गङ्गा आदि नदियों के दो स्वरूप होते हैं—एक जल रूपी और दूसरा इन्द्रादि अन्य देवताओं के नाईं शरीरधारी और चेतन अर्थात् देवता रूपी है तथा देवता स्वरूपी रूप, जल रूपी स्वरूप का स्वामी है । और सिन्धु, गङ्गा आदि नाम, उन देवता रूपी स्वरूपों हीं के हैं । उनके अधीन न होने के कारण उनके जल रूपी स्वरूपों का भी उन्हीं के नामों से लोक में व्यवहार होता है कि यह सिन्धु हैं और यह गङ्गा हैं इत्यादि । तथा उन जल रूपियों में स्नानादि करने का फल भी उनके स्वामी देवताओं के द्वारा ही मिलता है और नदियों के इन दोनों स्वरूपों में प्रमाण ये दो वैदिक मन्त्र हैं कि—

"स्वश्वा०" वह यह सिन्धु अच्छे अश्ववाली, अच्छे रथवाली, अच्छे वस्त्रवाली और सुवर्ण के आभरणों से भूषित, अन्नवाली, ऊनवाली, सदा युवती, '*सीलमा*' नामक तृणविशेषवाली, और सुन्दरी, मधु के वर्द्धक निर्गुंडी आदि को धारण करती है। "सुखं०" सिन्धु देवता, अश्ववाले, सुखकारी रथ को जोतती है । उस रथ से सिन्धु देवता मुझे अन्न दे, इस यज्ञ में सिन्धु के इस रथ

सायणः—सिन्धुर्देवता सुखं सुखकरं शोभनद्वारं वा अश्विनं अश्ववन्तं रथं युयुजे युक्त
तेन रथेन वाजं अन्नं सनिषत् प्रयच्छतु अस्मिन्नाजौ संग्रामे यज्ञे वा अस्य सिन्धुरथस्य महि
महान् हि पनस्यते स्तूयते कीदृशस्यास्य अदब्धस्य अन्यैरहिंस्यस्य स्वयशसः स्वायत्तकीर्ति
विरप्शिनः महन्नामैतत् महतः ॥ ६ ॥

सरस्वती सरयूः सिन्धुरूर्मिभिर्महोमहीरवसायान्तु वक्षणीः ।
देवीरापो मातरः सूदयित्न्वो घृतवत्यो मधुमन्नो अर्चत ॥
(ऋ० मं० १० अ० ५ सू० ६४ मं० ९

सायणः—महो महतोऽपि महीर्महत्यः अत्यन्तं महत्यः ऊर्मिभिः सहिताः सरस्वती
सरयूः, सिन्धुः एतदाद्या एकविंशतिसङ्ख्याकाः वक्षणीः इमा नद्यः अवसा रक्षणेन हेतु
आयान्तु अस्मदीयं यज्ञं प्रत्यागच्छन्तु । ततः देवीः देवनशीला मातरो मातृभूताः सूदयित्न्वः
प्रेरयित्र्यः तासामापः घृतवत् घृतयुक्तं मधुमत् मधुसहितमात्मीयं पयः नोऽस्मभ्यम्
प्रयच्छत ॥ ६ ॥

ऋषयो वै सरस्वत्यां सत्रमासत ( ऐतरेय ब्रा० २ पंचिका ३ अ० १६ कं० )

पञ्चनद्यः सरस्वतीमपि यन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सा देशे अभवत्सरित् ॥
( यजु० अ० १४ मं० ११

अर्थः—( सस्रोतसः ) सरस्वतीसमानप्रवाहाः दृषद्वतीप्रभृतयः पञ्चनद्यः सरस्वती
( अपि यन्ति ) सङ्गच्छन्ति ( तु ) अतः अस्मिन् देशे सरस्वती सरित् पञ्चधा अभवत् इति

महो अर्णः सरस्वती प्रचेतयति केतुना ।
धियो विश्वा विराजति ॥
( ऋ० मं० १ अ० १ सू० ३ वर्ग ६ मं० ११

भाषा

की बड़ी महिमा कही जाती है जो रथ कि किसी शत्रु के तोड़ने योग्य नहीं हैं तथा नामी और महान्
भी है । "सरस्वती०" बहुत बड़ी और लहरों के सहित ये सरस्वती, सरयू, सिन्धु आदि एक्कीस
नदियाँ 'आप०' रक्षा के लिये मेरे यज्ञ में आवैं और हर्ष देनेवाली माता के तुल्य प्रेरणा करती हुई
और मधु के सहित अपने पयस् ( जल वा दूध ) को मुझे दे दें ।

"ऋषयो वै०" सरस्वती नदीं में ऋषि, सत्र करते हैं । "पञ्च नद्यः०" दृषद्वती आदि पाँच
नदियाँ सरस्वती नदी से मिलती हैं इससे इस देश में सरस्वती नदी पाँच प्रकार की हैं ।

"महो अर्णः" इस मंत्र पर सायणाचार्य ने यह व्याख्यान किया है कि सरस्वती दो प्रकार
की हैं—एक देवता रूपी दूसरी जल रूपी । उनमें से देवता रूपी सरस्वती का वर्णन, पूर्व
ऋचाओं में हो चुका है । अब इस ऋचा से नदी अर्थात् जल रूपी सरस्वती का वर्णन किया जाता
है कि नदी रूपी सरस्वती अपने वेग से बहुत जल का प्रकाश करती हैं और अपने देवता रूप से
सब बुद्धियों को सदा प्रज्वलित करती हैं । सरस्वती के उक्त दो स्वरूपों को निरुक्त में यास्क महर्षि

सायणः—द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च। तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता। अनया तु नदीरूपा प्रतिपाद्यते। तादृशी सरस्वती केतुना कर्मणा प्रवाहरूपेण महो अर्णः प्रभूतमुदकं प्रचेतयति ज्ञापयति। किं च स्वकीयेन देवतारूपेण विश्वा-धियः सर्वानुष्ठात् प्रज्ञानानि विराजति विशेषेण दीपयति अनुष्ठानविषया बुद्धिः सर्वदोत्पाद-यतीत्यर्थः। सरस्वत्या द्विरूपत्वं यास्कः दर्शयति—"तत्र सरस्वतीत्येतस्य नदीवद् देवतावच्च निगमा भवन्ति" इति एकशतसङ्ख्याकेषूदकनामस्वर्णः क्षोद इति पठितम्। एतां ऋचं यास्को व्याचष्टे—महदर्णः सरस्वती प्रचेतयति प्रणमयति केतुना कर्मणा प्रज्ञया चेमानि च सर्वाणि प्रज्ञानान्यभिविराजतीति।

अष्टासप्ततिं भरतो दौष्यन्तो यमुनामनु गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतो हयान् (ऐतरेय ब्रा० पञ्चिका ४ अ० २३ कं०)

अत्र च भरतदुष्यन्तशब्दयोर्जातिवाचित्वमेव न तु कालविशेषावच्छिन्नयत्किंचित्-व्यक्तिवाचित्वम् "आकृतिस्तु क्रियार्थत्वात्" (मी० अ० १ पा० सू० ३३) इति न्यायात्। "अबध्नात्" इति च न भूतार्थकम् वेदे भूतार्थकलकाराभावस्य क्षुद्रोपद्रवविद्रावणे वेदबाह्य-मतसमालोचने प्रतिपादितपूर्वत्वादतो न वेदसादित्वशङ्कावकाशः।

ये संवत्सराय दीक्षन्ते तेषां तीर्थमेव प्रापणीयम्।

(शत० ब्रा० १२।२।१।१)

अर्थः—अतिरात्रयज्ञे ये दीक्षितास्ते तीर्थस्नानफलमाप्नुवन्तीति।

भाषा

ने कहा है कि "*तत्र सरस्वती०*" सरस्वती, इस शब्द के दो अर्थ नदी और देवता, ब्राह्मणभाग में कहे हैं। और यास्क महर्षि ने इस मन्त्र का यही अर्थ कहा है जो कि में (सायण) ने कहा इति।

"*अष्टासप्तति०*" दुष्यन्त का पुत्र भरत, यमुना के तीर में ७८ और गंगा के तीर में ५५ अश्वमेध करता है।

यहाँ यह शंका नहीं करनी चाहिये कि '*दुष्यन्त*' और '*भरत*' नाम लेने से वेद के अनादि होने में विघ्न पड़ता है क्योंकि "*क्षुद्रोपद्रवविद्रावण*" में वेदबाह्यों के मतखण्डन के अवसर पर "*आकृतिस्तु क्रियार्थत्वात्*" (मी० अ० १ पा० ३ सू० ३३) इस अधिकरण के अनुसार यह सिद्ध कर दिया गया है कि गौ आदि शब्द की नाईं दुष्यन्त आदि शब्दों का भी साक्षात् कोई एक शरीर अर्थ नहीं है किन्तु दुष्यन्तत्व आदि जाति ही है अर्थात् जगत् की सृष्टियों के अनादि और अनन्त प्रवाहों में कितने दुष्यन्त और कितने उनके पुत्र भरत हो चुके तथा कितने आगे चल कर होंगे इसकी कोई संख्या नहीं हो सकती और त्रिकालज्ञ के तुल्य वेद ने उन सबको दुष्यन्त आदि शब्दों के द्वारा सामान्य रूप से कह दिया है।

"*ये सम्वत्सराय०*" रात्रिसत्र यज्ञ में जो दीक्षित होते हैं उनको तीर्थ स्नान करने का फल होता है। यहाँ तक जलतीर्थों के विषय में विशेष वैदिक प्रमाण दिखलाये गये।

अथ स्थलतीर्थेषु ऋक्परिशिष्टे—

ऋक्संहितायाः सप्तमाष्टकस्य ५ अध्याये २८ वर्गानन्तरं पञ्चर्चं परिशिष्टम्—

तत्र श्रूयते—यत्र गङ्गा च यमुना यत्र प्राची सरस्वती ।
यत्र सोमेश्वरो देवस्तत्र माममृतं कृधि ॥ ५ ॥

अष्टमाष्टकस्य तृतीयाध्याये षड्वर्गानन्तरमियमेका ऋक् श्रूयते—

सितासिते सरिते यत्र सङ्गमे तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ॥ १ ॥

देवा ह वै सत्रं निषेदुरग्निरिन्द्रः सोमो मखो विष्णुर्विश्वेदेवा अन्यत्रैवाश्विभ्याम् तेषां कुरुक्षेत्रं देवयजनमास तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनम् ( शत० कां० १४।१।१)

ऋक् संहितायां सप्तमाष्टकस्य ५ अ० २० वर्गानन्तरम् पञ्चर्चे परिशिष्टे यथा—

यत्र देवा महात्मानः सेन्द्राश्च समरुद्गणाः ।
ब्रह्मा च यत्र विष्णुश्च तत्र माममृतं कृधि ॥ ४ ॥

इति ब्रह्मप्रधानं पुष्करतीर्थम् ।

यत्र तत्परमं पदं विष्णोर्लोके महीयते ।
देवैः सुकृतकर्मभिस्तत्र माममृतं कृधि ॥ १ ॥

इति विष्णुपदप्रधानं गयातीर्थम् ।

अथर्ववेदीयगोपालोत्तरतापनीयोपनिषदि श्रूयते—

भाषा

अब स्थल ( भूमि रूपी ) तीर्थों के विषय में विशेष रूप से वैदिक प्रमाण दिखलाये जाते हैं । "*यत्र गंगा*" हे परमेश्वर ! जहाँ गङ्गा और यमुना भी हैं तथा पूरबी सरस्वती भी (गुप्त रूप से ) हैं और जहाँ शिवलिङ्ग सोमेश्वर नामक (प्रतिमा ) है वहाँ मुझको मोक्ष दीजिये ।

"*सितासिते०*" जहाँ शुक्ल और कृष्ण दो नदियों का संगम है वहाँ स्नान करनेवाले स्वर्ग को जाते हैं और जो धीर बुद्धिमान् (मोक्ष के चाहने वाले) मनुष्य वहाँ शरीर छोड़ते हैं वे मोक्ष पाते हैं ये दो वेदवाक्य तीर्थराज श्री प्रयाग के प्रतिपादक हैं । "*देवा ह वै०*" अग्नि, इन्द्र, चन्द्रमा, यज्ञ विष्णु आदि अश्विनीकुमारों दोनों से अतिरिक्त सब देवता यज्ञ करते हैं और उनका देवयजन (यज्ञ स्थान ) कुरुक्षेत्र को देवताओं का देवयजन कहते हैं ।

"*यत्र देवा०*" जहाँ इन्द्र और वायुगण के सहित महात्मा देवता हैं और जहाँ ब्रह्मा और विष्णु भी हैं वहाँ मुझे मोक्ष दीजिये ।

'यह वेदवाक्य पुष्करतीर्थ का प्रतिपादक है जिसमें ब्रह्मा प्रधान हैं ।

"*यत्र तत्०*" इस लोक में पुण्यात्मा देवताओं से वह जो प्रसिद्ध विष्णुपद पूजा जाता है वहाँ मुझे मोक्ष दीजिये । यह वेदवाक्य गया तीर्थ का प्रतिपादक है क्योंकि उसमें विष्णुपद ही प्रधान है ।

सहोवाच तं हि नारायणो देवः सकाम्याः मेरोः शृङ्गे यथा सप्त पुर्य्यो भवन्ति तथा निष्काम्याः सकाम्या भूगोलचक्रे सप्त पुर्य्यो भवन्ति तासां मध्ये साक्षात् ब्रह्मगोपालपुरी हीति ॥ २८ ॥

सकाम्या निष्काम्या देवानां सर्वेषां भूतानां भवति था हि वै सरसि पद्मं तिष्ठति तथा भूम्यां तिष्ठतीति । चक्रेण रक्षिता हि मथुरा तस्माद् गोपालपुरी भवति ॥ २९ ॥

बृहद्बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यं कामवनं वहुलो वहुलवनं कुमुदं कुमुदवनं खदिरः खदिरवनं भद्रो भद्रवनं भाण्डीर इति भाण्डीरवनं श्रीवनं लोहवनं वृन्दाया वृन्दावनमेतैरावृता पुरी भवति ॥ ३० ॥

तत्र तेष्वेव गहनेष्वेव देवता मनुष्या गन्धर्वा नागाः किन्नरा गायन्ति इति नृत्यन्तीति ॥ ३१ ॥

तत्र द्वादशादित्या एकादश रुद्रा अष्टौ वसवः सप्त मुनयो ब्रह्मा नारदश्च पञ्च विनायका वीरेश्वरो रुद्रेश्वरो अम्बिकेश्वरो गणेश्वरो नीलकण्ठेश्वरो विश्वेश्वरो गोपालेश्वरो भद्रेश्वरोऽन्यानि लिङ्गानि चतुर्विंशतिर्भवन्ति ॥ ३२ ॥

द्वे वने स्तः कृष्णवनं भद्रवनं तयोरन्तर्द्वादशवनानि पुण्यतमानि तेष्वेव देवास्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्ताः ॥ ३३ ॥

तत्र रामस्य राममूर्तिः प्रद्युम्नस्य प्रद्युम्नमूर्तिरनिरुद्धस्यानिरुद्धमूर्तिः कृष्णस्य कृष्णमूर्तिः ॥ ३४ ॥

वनेष्वेवं मथुरास्वेवं द्वादशमूर्तयो भवन्ति ॥ ३५ ॥

भाषा

"सहोवाच तं हि०" श्री नारायणदेव, ब्रह्मा से कहते हैं कि जैसे मेरु पर्वत के शृङ्ग पर सात पुरी होती हैं वैसे भूलोक में सात पुरी होती हैं। उनके मध्य में यह गोपालपुरी ( मथुरा ) साक्षात् ब्रह्मरूप है ॥ २८ ॥

सब देवताओं और अन्यान्य प्राणियों के लिये विषय भोग और मोक्ष को देनेवाली यह, जैसे हृदय में पद्म रहता है वैसे मथुरापुरी भूमि में है और चक्र से रक्षित है इससे गोपालपुरी है ॥ २९ ॥

इस मथुरापुरी में बृहद्वन, मधुवन, तालवन, काम्यवन, बहुलवन, कुमुदवन, खदिरवन, भद्रवन, भाण्डीरवन, श्रीवन, लोहवन, वृन्दावन, ये वन होते हैं ॥ ३० ॥

वहाँ उन्हीं वनों में देवता, मनुष्य, गन्धर्व, नाग, किन्नर, गाते और नाचते हैं ॥ ३१ ॥

उस पुरी में १२ आदित्य, ११ रुद्र, ८ वसु, ७ मुनि, ब्रह्मा, नारद, ५ विनायक और वीरेश्वर, रुद्रेश्वर, गणेश्वर, नीलकण्ठेश्वर, विश्वेश्वर, गोपालेश्वर, भद्रेश्वर आदि २४ लिङ्ग होते हैं ॥ ३२ ॥

संक्षेप से उस पुरी में दो वन हैं—कृष्णवन और भद्रवन तथा उन वनों के भीतर १२ वन बड़े पुण्य हैं। उन वनों में देवता रहते हैं और सिद्ध लोग सिद्धि पाते हैं ॥ ३३ ॥

वहाँ राम (बलभद्र), प्रद्युम्न, अनिरुद्ध और कृष्ण की मूर्तियाँ होती हैं ॥ ३४ ॥

ऐसे ही वनों में और मथुरा में १२ मूर्तियाँ होती हैं। एक मूर्ति की रुद्र लोग, दूसरी की

एकां हि रुद्रा यजन्ति, द्वितीयां ब्रह्मा यजति तृतीयां ब्रह्मज्ञा यजन्ति चतुर्थीं मरुतो यजन्ति पञ्चमीं विनायका यजन्ति षष्ठीं वसवो यजन्ति सप्तमीमृषयो यजन्ति अष्टमीं गन्धर्वा यजन्ति नवमीमप्सरसो यजन्ति दशमीं वै ह्यन्तर्द्धाने तिष्ठति एका दशमेति स्वपदं गता द्वादशमेति भूम्यां तिष्ठति ॥ ३६ ॥

तां हि यजन्ति ते मृत्युं तरन्ति मुक्तिं लभन्ते । गर्भजन्मजरामरणतापत्रयात्मकं दुःखं तरन्ति ॥ ३७ ॥

तदप्येते श्लोका भवन्ति—

प्राप्य मथुरां पुरीं रम्यां सदा ब्रह्मादिसेविताम् ।
शङ्खचक्रगदाशार्ङ्गरचितां मुसलादिभिः ॥ ३८ ॥
यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः ।
रामानिरुद्धप्रद्युम्नैरुक्मिण्या सहितो विभुः ॥ ३९ ॥

अत्रत्य 'सहोवाच तं ही' त्याद्यष्टाविंशतितमश्रुतिमूलिकैव ।

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥ १ ॥

इति गारुडस्था स्मृतिः निरवधिपरम्पराप्राप्ता त्रैलोक्यव्यापिनी ख्यातिश्चायोध्यादीनां सप्तपुरीणाम् ।

भाषा

ब्रह्मा, तीसरी की सनत्कुमार आदि ब्राह्मण, चौथी की वायु लोग, पाँचवीं की विनायक लोग, छठवीं की वसु लोग, सातवीं की ऋषि लोग, आठवीं की गन्धर्व लोग, नवीं की अप्सरा लोग पूजा करते हैं और दशवीं मूर्ति वहीं गुप्त रहती है । ग्यारहवीं मूर्ति वहीं ऊपर आकाश में रहती है और बारहवीं मूर्ति प्रसिद्ध होकर भूमि पर रहती है ॥ ३५ ॥ ३६ ॥

इन मूर्तियों की जो पूजा करते हैं वे अज्ञान को तर जाते हैं और गर्भ, जन्म, मरण से छूट जाते हैं ॥ ३७ ॥

ऐसे ही मंत्र होते हैं कि "प्राप्य०" शङ्ख, चक्र, गदा, शार्ङ्गधनु और मुशलादि आयुधों से रक्षित तथा ब्रह्मा आदि से सेवित, रम्या मथुरापुरी को पाकर देवता, मनुष्य, गन्धर्व आदि अधि-वास करते हैं ॥ ३८ ॥

इसी ( सहोवाच तं हि ) २८ वीं श्रुति के मूल से गरुड़ पुराण के प्रेतकल्प का यह वाक्य है कि "अयोध्या०" अयोध्या, मथुरा, माया (हरिद्वार), काशी, काञ्ची (शिव काञ्ची, विष्णु काञ्ची) अवन्ती, द्वारवती (द्वारका) ये सातपुरी मोक्ष देनेवाली हैं और इन पुरियों की अनादि काल से त्रैलोक्यव्यापिनी प्रसिद्धि का भी "सहोवाच तं हि" यह उक्त वेदवाक्य मूल है तथा इसी उप-उपनिषद् रूपी मूल को लेकर पुराण आदि में ये श्लोक हैं कि—

एतदुपनिषन्मूलकान्येव च—

राजधानी ततः साऽभूत्सर्वयादवभूभुजाम् ।
मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः ॥
मथुरेति त्रिवर्णीयं त्रयीतोऽपि गरीयसी ।
यत्सानुधावति ब्रह्म ब्रह्मैनामनुधावति ॥
अजन्मा यज्ञातः स जनिरजनित्वं च भजते,
कपाली पालोऽस्याः सकलभुवनैकाहुतिकरः ।
सहस्रं वत्सानामपहरति धाता त्रिजगता-
महो किं किं चित्रं वितरति न चित्रा मधुपुरी ॥
बृन्दावनं परित्यज्य पदमेकं न गच्छति ।
द्विभुजो राधिकाकान्तो लक्ष्मीकान्तश्चतुर्भुजः ॥
वरं बृन्दावने रम्ये शृगालत्वं स वाञ्छति ।
न तु निर्विषयं मोक्षं गन्तुमिच्छति गौतमः ॥

इत्यादीनि वाक्यानि ।

एवम् जाबालीयोपनिषदि श्रूयते—

तं बृहस्पतिः शक्रगुरुरुवाच याज्ञवल्क्यम् यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् अत्र

भाषा

"राजधानी०" तदनन्तर मथुरा, सब यदुवंशी राजाओं की राजधानी हुई जहाँ कि विष्णु भगवान् सदा सन्निहित रहते हैं ।

"मथुरेति०" 'मथुरा ये' तीन अक्षर, तीन वेद से भी बहुत बड़े हैं क्योंकि तीन वेद ब्रह्म के पीछे दौड़ते हैं और इन अक्षरों के पीछे ब्रह्म स्वयं दौड़ते हैं ।

"अजन्मा०" मधुपुरी (मथुरा) किस २ आश्चर्य को नहीं दिखलाती, क्योंकि इस पुरी में उनका जन्म हुआ कि जिन (परमेश्वर) का जन्म ही नहीं होता और जिन (जीव) का जन्म होता है वे यहाँ जन्म से छूट जाते हैं अर्थात् मोक्ष पाते हैं तथा प्रलयकाल में अपने तीसरे नेत्र के अग्नि में तीनों लोकों को एक ही आहुति करनेवाले संहार रुद्र, इस पुरी के पालन करनेवाले हैं और तीनों लोक के स्वामी ब्रह्मदेव, यहाँ सहस्रों बछरों को चुराते हैं ।

"बृन्दावनं०" श्रीराधिका के द्विभुज स्वामी और श्रीलक्ष्मी के चतुर्भुज स्वामी बृन्दावन को छोड़ कर एक पद भी कहीं नहीं जाते ।

"वरं बृन्दावने०" वह गौतम महर्षि, रम्य बृन्दावन में शृगाल होना चाहते हैं किन्तु विषयों से शून्य मोक्ष को नहीं चाहते, इत्यादि । ऐसे ही काशी पुरी के विषय में जाबाल उपनिषद् के ये वाक्य हैं कि "तं बृहस्पतिः०" इन्द्र के गुरु बृहस्पति, याज्ञवल्क्य से कहते हैं कि कुरुक्षेत्र नामक तीर्थ, देवताओं के देवयजन और सब प्राणियों के मोक्ष स्थान रूपी जिस क्षेत्र से न्यून है वह

हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति तस्मादविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेदेवमेतद्याज्ञवल्क्य इति ।

अस्यार्थः—'कुरुक्षेत्रं' तदाख्यं क्षेत्रं, 'देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' यत् अनु' देवानां देवयजनात् सर्वेषां भूतानां ब्रह्मसदनात् यस्मात् हीनम् 'हीने' इत्यनोः कर्मप्रवचनीयत्वम् । तत् किं, यस्माद्धीनम् तदाह 'अविमुक्तं वै कुरुक्षेत्रम्, अविमुक्तमेव प्रधानं कुरुक्षेत्रं कस्मात् ? यतः अविमुक्तम्—देवानां देवयजनम्, च सर्वेषां भूतानां ब्रह्मसदनम्, च 'गामश्व' मितिवदार्थः समुच्चयः । तत् कुरुक्षेत्रं तु देवानां देवयजनमेव "तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनम्" (श० कां० १४।१।१।) इति श्रुतेः न तु तत् सर्वेषां भूतानां ब्रह्मसदनम् मोक्षदमिति यावत् । अविमुक्तं तु मोक्षदमपि कथमत्र मोक्षो भवति ? तदाह अत्र हीति । स्पष्टम् ।

तथा तत्रैव—अथैनमत्रिः पप्रच्छ याज्ञवल्क्यम् य एषोऽनन्तोऽव्यक्त आत्मा तं कथं जानीयामिति । सहोवाच याज्ञवल्क्यः । सोऽविमुक्त उपास्यो य एषोऽनन्तो व्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायां नास्यां मध्ये प्रतिष्ठित इति का वै वरणा का च नासीति सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणेति सर्वानिन्द्रियकृतान् पापान्नाशयति तेन नासीति इति ।

अत्र च द्वितीयकुरुक्षेत्रपदेनाविमुक्तमेवोच्यते 'अविमुक्तं वै" इत्यवधारणार्थकेन वैशब्देन भूतानां ब्रह्मसदनत्वोक्त्या च तथैव प्रतिपादनात् । इदं च सर्वमुपनिषद्वाक्यम् अविमुक्तक्षेत्रस्य ब्रह्मसदनत्वे तत्र म्रियमाणानां रुद्रकृततारकब्रह्मोपदेशलाभे तेन तत्त्वज्ञाने तेन

भाषा

अविमुक्त ( काशी ) ही प्रधान कुरुक्षेत्र है क्योंकि कुरुक्षेत्र, केवल देवताओं का देवयजन ही है जैसा कि "*तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनम्*" ( श० का० १४।१।१। ) इस श्रुति में कहा है और अविमुक्त तो देवताओं का देवयजन भी है और सब प्राणियों का मोक्षस्थान भी है क्योंकि यहाँ प्रायः सर्वसाधारण मृत जीव के प्राण निकल जाने के समय रुद्र, तारकब्रह्म का उपदेश करते हैं जिससे वह प्राणी तत्त्वज्ञानी होकर मोक्ष पाता है इससे अविमुक्त ही में वास करै, अविमुक्त को न छोड़े। हे याज्ञवल्क्य ! यह बात ऐसी ही है। "*अथैनमत्रिः०*" तदनन्तर इन याज्ञवल्क्य से अत्रि पूछते हैं कि जो यह अनन्त और अव्यक्त आत्मा है उसको मैं कैसे जानूँ ? "*याज्ञवल्क्य०*" जो यह अनन्त अव्यक्त आत्मा है उसकी उपासना अविमुक्त में करै क्योंकि यह आत्मा अविमुक्त में स्थित है।

"*अत्रि०*" वह अविमुक्त कहाँ स्थित है ? याज्ञव०—वरणा और नासी (अस्सी) के मध्य में। अत्रि०—वरणा और नासी नाम क्यों है ? याज्ञ०—इन्द्रियों से किये हुए सब दोषों का वारण करती है इससे 'वरणा' नाम है और इन्द्रियों से किये हुए सब पापों का नाश करती है इससे 'नासी' नाम है । इन वेदवाक्यों से इतने विषय स्पष्ट होते हैं कि अविमुक्त नामक क्षेत्र, मोक्ष का स्थान है और वहाँ मरने वाले प्राणियों को श्री शिवजी से तारक ब्रह्म का उपदेश मिलता है और उससे तत्त्वज्ञान होता है और उससे मोक्ष होता है तथा 'नासी' इस नामान्तर से यहाँ कही हुई अस्सी नदी और

मोक्षीभावे क्षेत्रस्याविमुक्तस्य निषेव्यत्वापरित्याज्यत्वयोः वरणानाम्न्या नद्याः परोक्षनासीति नामान्तरनिर्दिष्टासीनामकनद्याश्च मध्यस्थत्वे क्षेत्रस्यान्वर्थाविमुक्तनामकत्वे च स्फुटतरमेव। तत्परम् सर्वस्यैतस्यार्थजातस्य काशीखण्डादौ महता प्रबन्धेन बहुशो निवेदितस्य प्रत्यभिज्ञानात् अर्थान्तरोत्प्रेक्षायाश्च पुराणाद्युपबृंहणाभावेनानुपादेयत्वाद् अविमुक्तपदेन सोपाधिकेश्वरोपासनविवक्षायामपि सिद्धवत्कृत्वा अत्र निर्दिष्टस्यैतत्क्षेत्रमाहात्म्यस्य न किञ्चिदपचीयते, उभयत्रापि सामञ्जस्येन समन्वयसंभवात्। किं च काशीखण्डे लैङ्गमात्स्यकौर्माद्यनेकपुराणवाक्यानां प्रत्यक्षैर्जाबालिवाक्यैरेव सह मूलमूलिभावकल्पना न्यायबलोपोबलितत्वाज्ज्यायसी न तु परोक्षैर्वाक्यान्तरैः, कल्पनागौरवप्रसङ्गादिति मूलमूलिभावान्यथानुपपत्याऽपि जाबालिवाक्यानामेषामर्थान्तरपरत्वशङ्का निरस्यतेतराम्। अपि च—

रामतापन्यां चतुर्थकण्डिकायामपि—

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम् इत्यारभ्य समानमेव समाम्नाय अथ तं प्रत्युवाच स्वयमेव याज्ञवल्क्यः—

श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः।
मन्वन्तरसहस्रं तु जपहोमार्चनादिभिः॥

भाषा

वरणा नदी के बीच में अविमुक्त क्षेत्र है तथा परमेश्वर से कदापि विमुक्त नहीं होता, इससे इस क्षेत्र का 'अविमुक्त' नाम है। और ये सब विषय, स्कन्दपुराण आदि के काशीखण्ड, आदि भागों में स्पष्टता के साथ निरूपण किये गये हैं इसलिये इन उक्त दोनों वेदवाक्यों का यही अर्थ निश्चित है जो कि कहा गया क्योंकि पुराण आदि से वेदार्थ का निश्चय करना, इस कारण उचित है कि उनका मूल वेद ही है। और जब कि पुराण भागों में वाराणसी के नाम अविमुक्त, और "*काशी*" आदि कहे है तब इसमें कुछ सन्देह नहीं हो सकता कि ये वेदवाक्य काशीतीर्थ में प्रमाण हैं।

प्र०—ये वाक्य ईश्वर की उपासना रूपी अर्थ में क्यों न लगाये जायँ ?

उ० १—यदि उसमें लगाये भी जायँ तो कुछ हानि नहीं हो सकती क्योंकि काशीक्षेत्र में भी ये वाक्य पूर्ण रूप से लगते हैं।

उ० २—"कुरुक्षेत्र" शब्द के ग्रहण से स्पष्ट ही सिद्ध होता है कि अविमुक्त, कुरुक्षेत्र की नाईं स्थल-तीर्थ है।

उ० ३—जब कि स्कन्दपुराण का काशीखण्ड, लिङ्गपुराण, मत्स्यपुराण, कूर्मपुराण, आदि के जो २ वाक्य आगे चल कर दिखलाये जायँगे उनमें ये पूर्वोक्त विषय स्पष्ट कहे हुए हैं जो कि इस वेदवाक्यों में कहे हैं तो ऐसी दशा में यह अवश्य कहना पड़ेगा कि ये दो वेदवाक्य उन पुराणवाक्यों के मूल हैं क्योंकि, वेददुर्गसज्जन के 'स्मृति प्रामाण्य' प्रकरण में कहे हुए सिद्धान्त के अनुसार, वेदवाक्य रूपी मूल के बिना, पुराण आदि स्मृति, प्रमाण नहीं हो सकती और जब ऐसा है तब इन वेदवाक्यों का वही अर्थ उचित है जो कि काशीखण्ड आदि के वाक्यों में कहा है।

उ० ४—रामतापनीय उपनिषद् की चौथी कंडिका के अनुसार भी इन वेदवाक्यों का वही अर्थ

ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम् ।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वरेति ॥
सहोवाच—मणिकर्ण्यां मम क्षेत्रे गङ्गायां वा तटे पुनः ।
म्रियते देहि तज्जन्तोर्मुक्तिं नातो वरान्तरम् ॥

अथ सहोवाच श्रीरामचन्द्रः—

क्षेत्रेऽत्र तव देवेश ! यत्र कुत्रापि वा पुनः ।
कृमिकीटादयोप्याशु मुक्ताः सन्तु च नान्यथा ॥
अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं संनिहितस्तत्र पाषाणप्रतिमादिषु ॥
क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मंत्रेणानेन मां शिव ।
ब्रह्महत्यादिपापेभ्यो मोचयिष्यामि मा शुचः ॥
त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्तानां प्राप्नुवन्ति ते ॥
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मंत्रं स मुक्तो भविता शिव ॥

इति परामृश्य योऽविमुक्तं पश्यति स जन्मान्तरितान् दोषान् नाशयति इत्युपसंहृतम्। एवं चैताभ्यां परामर्षोपसंहाराभ्यां समानविषयकत्वाय, मध्ये समाम्नातस्य दर्शितजाबालि-

भाषा

है जो कि काशी सम्बन्धी और अनन्तर में कहा गया है। और उक्त कंडिका का वेदवाक्य यह है कि-

"अथैनमत्रि०" यहाँ से आरंभ कर "नासीति०" यहाँ तक जैसा वाक्य जाबालि उपनिषद् का है वैसा ही रामतापनीय उपनिषद् की चौथी कंडिका भी है। परन्तु उसके अनन्तर उस कंडिका में यह कहा है कि "अथ तं०" इत्यादि। जिसका यह अर्थ है कि तदनन्तर अत्रि से याज्ञवल्क्य स्वयं कहते हैं कि काशी में प्रथम सहस्र मन्वन्तर तक श्रीरामजी के मन्त्र का शिवजी जप और होम पूजा भी करते हैं। तदनन्तर श्रीराम जी प्रसन्न होकर श्री शङ्कर से कहते हैं कि हे परमेश्वर ! जो आपके अभीष्ट हों सो माँगिये, मैं दूँगा। श्रीशिव०—मेरे क्षेत्र में मणिकर्णिका अथवा गङ्गातट में जो मरे उस प्राणी को आप मुक्त कीजिये इससे दूसरा वर मेरा नहीं है। श्रीराम०—हे देवेश ! इस आपके क्षेत्र में जहाँ कहीं कृमि, कीट आदि तक जो प्राणी मरें वे तुरन्त मुक्ति पावें, यह ऐसा ही होगा। और आपके इस अविमुक्त क्षेत्र में सब प्राणी मात्र की मुक्ति के लिये इस क्षेत्र की पाषाण-प्रतिमा आदि में मैं अपनी समीपता रखूँगा तथा हे शिव ! इस क्षेत्र में इस मंत्र से भक्तिपूर्वक जो मेरी पूजा करेगा उसके ब्रह्महत्यादि पापों को मैं छुड़ा दूँगा; आप चिन्ता न कीजिये। आपसे वा ब्रह्मा से जो प्राणी षडक्षर मंत्र का उपदेश पावेंगे वे सिद्ध हो जायँगे और शरीर छूटने पर मुझे पावेंगे तथा हे शिव ! मरने के समय जिस किसी प्राणी के दक्षिण कर्ण में आप स्वयं मेरे मन्त्र का उपदेश करेंगे वह मोक्ष पावेगा। जो अविमुक्त का दर्शन करता है वह अपने जन्मांतर के दोषों का नाश करता है। इति॥

योपनिषत्समानानुपूर्वीकस्य रामतापनीयवाक्यस्य काश्यपरनामकाविमुक्तक्षेत्रनिरूपण-परताया अतिविशदतया तत्समानानुपूर्वीकस्योदाहृतजाबालीयोपनिषद्वाक्यस्यापि काश्य-परनामाविमुक्तक्षेत्रनिरूपणपरत्वमेतद्वाक्यैकवाक्यतयैव सुस्पष्टमिति न तस्यार्थान्तरपरत्व-शङ्कापीति सकलमेव श्लिष्यते। एतदाख्यायिकातात्पर्य्यं च क्षेत्रस्यास्यैवमनुपमं माहात्म्यं शिवविष्णूभयसंमतमतो नात्र शैवेन वैष्णवेन वा विप्रतिपत्तव्यम्, श्रीरामस्य च परमेश्वरत्वम्। अत एव महादेवेनापि श्रीरामानुग्रहादेव काश्यां तारकोपदेशेन जन्तुर्मुक्तीक्रियत इति श्रीराम एव सेव्य इति विद्यांस्तुतौ बोध्यम्। तापनीयटीकाकृतस्तु तं प्रत्युवाचेत्यादिपूर्ववाक्यनिर्दिष्टैः साधारणैर्विशेषणैः काशीक्षेत्रस्य सोपाधिकब्रह्मणश्च साधारणमिदं निरूपणम्।

अत एव ब्रह्माण्डपुराणे—

मोक्षं दुर्लभं ज्ञात्वा संसारं चातिभीषणम्।
अविमुक्तं समासाद्य तत्रैव निधनं व्रजेत्॥ १॥

इत्युक्तं तस्मात्—अधिभूतं साधिदैवमध्यात्ममविमुक्तकम्।
आत्मा काशीभ्रुवोर्मध्ये सौलभ्यन्तूत्तरोत्तरम्॥ १॥
समष्टि व्यष्टिकं पूर्वं समष्टावेव चोत्तरम्।
व्यष्टावेव तृतीयं स्यात् त्रिषु चैकं न सन्त्यजेत्॥ २॥

इति संग्रह इत्याहुः। हरिवंशेऽपि १ पर्वणि २९ अ०—

तस्मात्तदविमुक्तं हि प्रोक्तं दैवेन वै स्वयम्॥६५॥ इति

अत्र नीलकण्ठः—अत्राप्रकृतस्याविमुक्तस्य कीर्तनमुपरिधारणन्यायेन वाराणस्या मुख्यमविमुक्तत्वं दर्शयति यथाहि जाबालाः 'सोऽविमुक्ते प्रतिष्ठित' इत्यविमुक्तप्रतिष्ठत्वमात्मन

भाषा

अब यह ध्यान देने के योग्य है कि अत्रि के प्रश्न से आरम्भ कर "अथ तं" इत्यादि वाक्यों से जो काशी और अविमुक्त नामक क्षेत्र के विषय में मंत्रोपदेश कह कर अन्त में "अविमुक्त" नाम से प्रकृत विषय जो समाप्त किया गया उसके अनुसार "य एषोऽनन्तो०" इस मध्यवर्ती वाक्य का वही अर्थ लगाया जायगा जो कि अविमुक्त नामक काशीक्षेत्र से सम्बन्ध रखता है और इसी बात के अनुसार, इसके तुल्य आकारवाले, जाबालि उपनिषद् के उक्त द्वितीय वाक्य का भी वही अर्थ लगाया जायगा जो कि अविमुक्त नामक कुरुक्षेत्र का सम्बन्धी और पूर्व में कहा भी गया है। इससे अब उन दोनों वेदवाक्यों का अर्थ इस वेदवाक्य के अर्थ से मिल गया। और इस वेदवाक्य में जो श्रीराम और श्री शिव के सम्वाद रूपी आख्यायिका है उसका तात्पर्य्य यह है कि काशीक्षेत्र का ऐसा अद्वितीय माहात्म्य है जो कि श्री शिव और श्री विष्णु दोनों के सम्मत है तथा श्रीराम परमेश्वर हैं क्योंकि श्री शिव भी उनके मंत्र के द्वारा मोक्ष देते हैं। इति।

उ० ५—हरिवंश के १ पर्व में २९ वें अध्याय में भी कहा है कि "तस्मात्तदवि०" पूर्वोक्त कारण से काशीक्षेत्र को श्री शिव जी ने "अविमुक्त' कहा है। यहाँ तक स्पष्ट हो गया कि अवि-मुक्त शब्द का वाराणसी क्षेत्र अर्थ है।

उपक्षिप्य "कुत्र तदविमुक्तमित्याकाङ्क्षायां 'वरणायां नास्यां च मध्ये प्रतिष्ठितः'" इत्यादि भौतिकमविमुक्तमुक्त्वा 'कतमच्चास्य स्थानम्भ्रुवोर्घ्राणस्य च सन्धिः' इति प्रश्नपूर्वकं शरीरे तत्स्थानं भ्रूघ्राणसन्धिरित्यामनन्ति इति। उपरिधारणन्यायस्तु ( पू० मी० द० अध्या० ३ पा० ४ ) "विधिस्तु धारणेऽपूर्वत्वात्" इति।

अत्र शास्त्रदीपिका—मृताग्निहोत्रे एवं श्रूयते "अधस्तात्समिधं धारयन् नतु द्रवेदुपरिहि देवेभ्यो धारयतीति" किमयं जीवदग्निहोत्रविधिः उत अनुवाद इति। पूर्वेण न्यायेनानुवादः कुतश्च प्राप्तिः आचारात् सर्वमभ्यर्हितं द्रव्यं प्रच्छाद्यैवान्यत्र नेतव्यमिति आचारात् प्राप्तम् अतोऽग्निहोत्रद्रव्यमपि गार्हपत्यादाहवनीयमानीयमानमाच्छादयितव्यम् तत् केनेति समिद्धारणविधानात् तन्नियमादृष्टार्थं भवति समिधाप्रच्छादयेदिति सा चोपरिधार्यमाणा प्रच्छादनक्षमा नान्यथेति प्राप्तमुपरिधारणमनूद्यते इति प्राप्ते ब्रूमः विधिरपूर्वत्वात् न ह्याचाराद् परिप्राप्तिः आच्छादनासमर्थत्वात् 'स्रुदण्डे समिधमुपसंगृह्ये, ति च श्रवणाद्दण्डप्रदेशेऽसौ धारयितव्येति कुतोऽनया हविषः प्रच्छादनम् अतोऽप्राप्तत्वात् हि शब्दपरित्यागेन विधिः अनुवादानुपपत्या हि विधिकल्पनमिति।

नीलकण्ठेन तु विधेयम्प्रधानं भवति इत्यभिप्रेत्य प्रकृते वाराणस्याः प्राधान्येनाविमुक्तत्वमुक्तमिति ध्येयम्। तदेवं श्रुतिसिद्धे वाराणसीक्षेत्रमाहात्म्ये तदुपबृंहणानि पुराणवाक्यान्यप्यनुसन्धेयानि। तत्राविमुक्तपदं वाराणसीक्षेत्रपरमिति तावदविवादम् वाराणसीमाहात्म्यपरेषु पुराणप्रदेशेष्वविमुक्तनाम्नैव शतशो व्यवहारदर्शनात् ब्रह्मसदनत्वं च वाराणस्याः सर्वेषामेव तत्र मृतानां जन्तूनां ब्रह्मसायुज्यलक्षणमोक्षप्रापकत्वाद् बोध्यम् इदमेव च ब्रह्मसदनत्वं कुरुक्षेत्राद् व्यावृत्तम् तत्प्रतिपादिकायां 'देवा ह वै' (श० का० १४।१।१) इति पूर्वोदाहृतशतपथश्रुतौ कुरुक्षेत्रे देवयजनत्वमात्रस्याभिधानात् अत एवात्र द्वितीयं कुरुक्षेत्रपदं तत्परमृन किं च 'अविमुक्तं वै कुरुक्षेत्र' मित्यवधारणादपि न तत्परम् इत्यनुपदमेवोक्तम्।

अत्र च लैङ्गे—इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम।
सर्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्वदा॥
नैमिषे च कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे।
अन्येषां सेवनात् स्नानान्न मोक्षः प्राप्यते यतः॥

भाषा

"इदं गुह्यं०" शिव जी कहते हैं कि प्राणियों के मोक्ष का सदा देने वाला यह मेरा वाराणसी क्षेत्र परम गोप्य है क्योंकि नैमिषारण्य, कुरुक्षेत्र, हरिद्वार और पुष्कर आदि तीर्थों के पूर्ण सेवन से भी मोक्ष नहीं मिलता और यहाँ वह मिलता है इस कारण यह क्षेत्र अन्य क्षेत्रों से श्रेष्ठ है। अपने यथेच्छ भोजन, शयन, क्रीड़ा आदि अनेक काम करते २ भी अविमुक्त में प्राणत्याग करने से प्राणी मोक्ष पाता है। धर्म की श्रद्धा छोड़ विषयों के पीछे लगा हुआ मनुष्य भी इस क्षेत्र में मृत्यु पाने से पुनर्जन्म नहीं पाता। सहस्रों जन्मों में योगी जिसको न पा सके उस परम मोक्ष को यहाँ मरणमात्र से प्राणी पाता है।

इह स प्राप्यते यस्मात्तस्मादेतद् विशिष्यते ।
कामं भुञ्जन् स्वपन् क्रीडन् कुर्वन् हि विविधाः क्रियाः ॥
अविमुक्ते त्यजन् प्राणान् जन्तुर्मोक्षाय कल्पते ।
विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ॥
इह क्षेत्रे मृतः सोऽपि संसारे न पुनर्विशेत् ।
जन्मान्तरसहस्रेषु यं न योगी समाप्नुयात् ।
तमिहैव परं मोक्षं मरणादधिगच्छति ॥ इति ।

ननु कथमत्र मरणादेव मोक्ष उच्यते तत्वज्ञानान्मोक्ष इति सर्वास्तिकसिद्धान्तविरोधात् 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरोधाच्चेति चेन्न; 'तारकं ब्रह्म व्याचष्टे' इत्युपनिषद्वाक्येन रुद्रकृततारकोपदेशसमधिगततत्वसाक्षात्कारद्वारैवात्र मृतानां मुक्तिप्रतिपादनेन विरोधाभावात् ।

तथा च काशीखण्डे ३ अध्याये—

अविमुक्ते महाक्षेत्रे सर्वेषां मुक्तिहेतुके ।
तारकस्योपदेशार्थं विश्वेशाधिष्ठिते स्वयम् ॥

इति देवान् प्रति ब्रह्मवाक्यम् ।

तत्रैव ५ अध्याये—

सहोवाचेति जाबालिरारुणेऽसिरिडा मता ।
वरणा पिङ्गला नाडी तदन्तस्त्वविमुक्तकम् ॥

भाषा

प्र०—जब कि सब आस्तिकों का यह सिद्धान्त है कि तत्वज्ञान ही से मुक्ति होती है और "*तमेव विदित्वा०*" परमेश्वर ही के ज्ञान से मोक्ष पाता है और कोई दूसरा उपाय मोक्ष के लिये नहीं है, यह वैदिक वाक्य भी है, तब कैसे इस लिङ्ग पुराण के अन्तिम वाक्य में काशी में मरण से मोक्ष कहा है ?

उ० १—जाबालि उपनिषद् के पूर्वोक्त प्रथम वाक्य में स्पष्ट ही यह कहा है कि काशी में मरण के अनन्तर रुद्र के किये हुए तारक ब्रह्म के उपदेश से तत्वज्ञानी होकर मोक्ष पाता है, तब वही तात्पर्य्य इस पुराण वाक्य का भी है जैसा कि—

"अविमुक्ते०" अविमुक्त नामक महाक्षेत्र, सब प्राणियों के मुक्ति का कारण है क्योंकि परमेश्वर तारक के उपदेशार्थ इस क्षेत्र में स्वयं स्थित हैं यह देवताओं के प्रति ब्रह्मा का वाक्य है । तथा "*सहोवाचेति०*" सहोवाच इत्यादि जाबालि उपनिषद् है और असी नदी, इडा नाम की नाड़ी है तथा वरणा, पिङ्गला नाड़ी है और इन दोनों के बीच में अविमुक्त क्षेत्र सुषुम्ना नाड़ी है तथा ये तीनों 'यह वाराणसी क्षेत्र है' । इसलिये इस क्षेत्र में मरने पर सब प्राणियों के कर्ण में श्री शिवजी तारक ब्रह्म का उपदेश करते हैं जिससे वे प्राणी ब्रह्म रूपी हो जाते हैं । यह अगस्ति का वाक्य है जिसमें कि जाबालि उपनिषद् के उक्त प्रथम वाक्य का नाम लेकर उसका अर्थ स्पष्ट यह कहा है कि काशी में

सा सुषुम्नापरा नाडी त्रयं वाराणसी त्वसौ ।
तदत्रोत्क्रमणे सर्वजन्तूनां हि श्रुतौ हरः ॥
तारकं ब्रह्म व्याचष्टे तेन ब्रह्म भवन्ति हि ।

इति प्रोक्तजाबालिवाक्योदाहरणपुरःसरं, तारकोपदेशेन मोक्षं प्रतिपादयत् अगस्तिवाक्यं च अनेनापि च वाक्येन जाबालिवाक्यानां क्षेत्रविशेषनिरूपणपरत्वं स्पष्टमेव प्रत्यभिज्ञायते।

तत्रैव ७ अध्याये—

संसारिचिन्तामणिरत्र यस्मात्तत्तारकं सज्जनकर्णिकायाम् ।
शिवोऽभिधत्ते सहसाऽन्तकाले तद्गीयतेऽसौ मणिकर्णिकेति ॥ इति ।

तत्रैव २१ अध्याये—

विपन्नानां च जन्तूनां यत्र विश्वेश्वरः स्वयम् ।
कर्णजापं प्रकुरुते कर्मनिर्मूलनक्षमम् ॥
यत्नतोऽयत्नतो वापि कालात्त्यक्त्वा कलेवरम् ।
तारकस्योपदेशेन काशीसंस्थोऽमृतो भवेत् ॥
वाराणसी समरसीकरणादृतेऽपि योगादयोगिजनताजनितापहन्त्री ।
तत्तारकं श्रवणगोचरतां नयन्ती तद्ब्रह्म दर्शयति येन पुनर्भवो न ॥

तथा—यदाहुः परमं तत्त्वं यदाहुर्ब्रह्मसत्तमम् ।
स्वसंवेद्यं यदाहुश्च तत्तत्रान्ते दिशाम्यहम् ॥
निर्वाणश्राणने यत्र पात्रापात्रं न चिन्तये ।
आनन्दकानने तन्मे दानस्थानं दिवानिशम् ॥

भाषा

मरण के अनन्तर मोक्ष होता है । और यहाँ यह भी ध्यान रखना चाहिये कि जाबालि उपनिषद् के पूर्वोक्त वाक्यों का अविमुक्त नामक वाराणसी क्षेत्र ही में तात्पर्य्य इस अगस्ति वाक्य के अनुसार भी स्पष्ट है । तथा—

"संसारि०" जो यह मणिकर्णिका कही जाती है वह संसारी जीवों के लिये चिंतामणि (पारस पत्थर) है क्योंकि अंत काल में प्राणियों के कर्ण में श्री शिवजी यहाँ तुरत तारक का उपदेश करते हैं । तथा—

"विपन्नानाञ्च०" जहाँ मरे हुये प्राणियों के कर्ण में स्वयं विश्वेश्वर, ऐसा उपदेश करते हैं कि जिससे पुनर्जन्म का दुःख छूट जाता है । बहुत पूर्व से अथवा तत्क्षण यहाँ वास से अपने अन्त समय में शरीर छोड़कर यहाँ (काशी में) प्राणी मोक्ष पाता है । यह वाराणसी तारक को सुनवाती हुई योग के बिना भी प्राणी को योगी के तुल्य ब्रह्मज्ञान कराकर संसार दुःख को नाश करती है जिससे कि पुनर्जन्म नहीं होता । तथा ये शिववाक्य हैं कि—

"यदाहुः०"—जिसको परम तत्त्व कहते हैं, और सर्वोत्तम ब्रह्म कहते हैं तथा स्वप्रकाश कहते हैं, काशी में अन्त समय मैं वही देता हूँ । जहाँ मोक्ष देने में मैं योग्य, अयोग्य अर्थात् पात्र, अपात्र

भवाम्बुधौ महाऽगाधे प्राणिनः परिमज्जतः ।
भूत्वैव कर्णधारोऽन्ते यत्र सन्तारयाम्यहम् ॥
महासमाधिसम्पन्नैर्वेदान्तार्थनिषेविभिः ।
दुष्प्रापो यत्र वै मोक्षः शोच्यैरपि स लभ्यते ॥

कूर्मपुराणे—

यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म तदेवमविमुक्तकम् ॥

एवं महाभारते शान्तिपर्वणि मोक्षधर्मे २२७ अध्याये युधिष्ठिरं प्रति भीष्मः—

अन्तकाले बलोत्कर्षाच्छनैः कुर्यादनातुरः ।
एवं युक्तेन मनसा ज्ञानं यदुपपद्यते ॥

अत्र भारतभावदीपे नीलकण्ठः—

एवंविधसाधनसंपत्यभावेऽपि मोक्षे उपायान्तरमस्तीत्याह—अन्तेति । तत् ज्ञानं अन्तकाले बलोत्कर्षात् कुर्यात् यज्ज्ञानं योगयुक्तेन मनसा शनैरुपपद्यत इत्यन्वयः । अयमाशयः—आदिपर्वणि विष्णवनुग्रहाद्देवा अमृतं लेभिरे, राहुस्तु छलेनामृतार्थी देवपङ्क्तिस्थो देहभेदेन सहैव तल्लेभ इत्युपाख्यातम् । तत्राख्यायिकानां स्वार्थे तात्पर्य्याभावात्ततः कश्चिद् विधेयोऽर्थ उन्नेयः । स च यथोक्तसाधानानुष्ठानात् सात्विका मुक्तिभाजः स्युः, असात्विकोऽपि मोक्षक्षेत्रे मरणकाले मुक्तिमाप्नोति इति ।

तथा आश्वमेधिके संवर्तमरुत्तीये काश्यां वसतः संवर्तस्य शवदर्शनेन शिवदर्शनसिद्धिः सूचिता । तेन काश्यां मृतस्य शिवत्वेन तत्प्रतिमावत्तच्छरीरस्य लिङ्गत्वं सूच्यते । तथेहापि बलोत्कर्षादन्तकाले ज्ञानं कुर्यादित्युच्यते तेन सर्वेणैतेन वाक्यसन्दर्भेण "अत्र हि जन्तोः प्राणे-

भाषा

का विचार नहीं करता । वह आनन्द वन ( काशी ) मेरा रात दिन मोक्ष के सदाव्रत देने का स्थान है और दुःख रूपी अगाध समुद्र में डूबते हुए प्राणियों को जहाँ अन्त समय में मैं कर्णधार होकर पार उतार देता हूँ । और बड़े बड़े समाधि वाले तथा वेदान्तों के अर्थ विचारने वाले लोगों के लिए भी दुर्लभ मोक्ष रूपी पुरुषार्थ को जहाँ स्वयं पापी लोग भी पा लेते हैं । तथा—

"यत्र०" वह अविमुक्त ऐसा है कि जहाँ स्वयम् ईश्वर महादेव, मृत्यु समय में तारक ब्रह्म का साक्षात् उपदेश करते हैं । तथा—

"अन्तकाले०" युधिष्ठिर के प्रति भीष्म ने यह बात कहा है कि नित्यानित्य विवेक आदि चार साधनों से अतिरिक्त एक यह भी मोक्ष का उपाय है कि जो तत्वज्ञान, योगाभ्यास आदि के द्वारा धीरे २ हो सकता है उसको अन्तकाल में बल के उत्कर्ष से उत्पन्न करै । 'भारतभावदीप' नामक भारत की टीका में पण्डित नीलकण्ठ ने इस श्लोक का यह भाव कहा है कि जैसा साधन वेदान्त दर्शन में कहा है वैसे साधन के अनुष्ठान से सात्विक मनुष्य, मोक्ष पाते हैं और जो मनुष्य सात्विक नहीं हैं वे भी मोक्ष के क्षेत्र में अपने मरण के समय मुक्ति पाते हैं जैसा कि जाबालि उपनिषद् में

षूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति तस्मादविमुक्त... निषेवेताविमुक्तं न विमुञ्चेदि"त्यस्याः श्रुतेरर्थः काश्यां म्रियमाणस्य रुद्रमुखात्तारकोपदेशा... मुक्तिप्राप्तिरिति समस्तपुराणोपबृंहितः सूचित इति गम्यते । बलोत्कर्षादतियत्नेन का... वासादन्तकाले ज्ञानं कुर्यादीशोपदेशात् संपादयेत् इति ॥ २० ॥

इत्येवमनेकपुराणादिवाक्यैस्तारकोपदेशाज्ज्ञानप्राप्तिस्तद्द्वारा मोक्षप्राप्तिरिति निर्विवाद... तारकं च प्रणव एव, तार एव तारकमिति रूढ्यनुगृहीतायाः समाख्याया बलात् ।

काशीखण्डे—न वर्ण्यते कैः किल काशिकेयम् जन्तोः स्थितस्यात्र यतोऽन्तकाले ।
पचेलिमैः प्राक्तनपुण्यभारैरोङ्कारमोङ्कारयतीन्दुमौलिः ॥

इति वाक्येनोपबृंहणाच्च । रामतापनीयपर्यालोचनया पद्मपुराणे—

अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम् ।
श्रीराम राम रामेति एतत्तारकमुच्यते ॥

इति वाक्येन च श्रीशब्दसहितत्रिरावृत्तरामशब्दरूपस्य मन्त्रस्य तारकत्वलाभस्तु प्रण... तादात्म्येन राममन्त्रवैभवबोधने पर्यवस्यति । येन मन्त्रेण भगवता वाराणस्यामुपदेशः क्रि... स एवायमिति प्रणवतादात्म्यातिशयो राममन्त्रे रामतापनीयया पाद्मे न च प्रकाश्यत इ... यावत् । अत एव सनत्कुमारसंहितायाम्—

अनिलो मृगनाभिरेणुगन्धिरधिकाशिप्रणवोपदेशकाले ।
हरते मरणश्रमं नराणां हरवामार्द्धकुचोत्तरीयजन्मा ॥

भाषा

काशी के सम्बन्ध में कहा है । इससे इस श्लोक का यह निचोड़ है कि बल के उत्कर्ष ( प्रयत्न से का... वास ) से अन्तकाल में श्री शिवजी के उपदेश के द्वारा ब्रह्मज्ञान का लाभ करे । इति ।

इन पूर्वोक्त पुराण और इतिहास के वाक्यों से भी यह निर्विवाद सिद्ध हो गया कि काशी... मरे हुए प्राणियों को तारक के उपदेश से ब्रह्मज्ञान के द्वारा मोक्ष मिलता है ।

अब यह निर्णय किया जाता है कि प्रकृत में किस मन्त्र को तारक कहते हैं ? तारक... प्रणव अर्थात् ( ॐकार ) ही है क्योंकि संसार दुःख से जो तार दे वही तारक कहलाता है। ... संसार दुःख से तारनेवाला, ॐकार से परे कोई मन्त्र नहीं है । तथा काशीखण्ड में भी यह कहा है कि

"न वर्ण्यते कैः०"—काशी का वर्णन कौन नहीं करता है ? क्योंकि यहाँ पूर्वजन्म, ... महापुण्य राशि के परिपाक से प्राणी के मृत्यु समय में उसको श्री शिवजी 'ॐकार' सुनाते हैं।

प्र०—जब कि पूर्वोक्त रामतापनी उपनिषद् से यह सिद्ध है कि काशी में श्री शिवजी श्री... को षडक्षर मन्त्र का उपदेश करते हैं । तथा पद्मपुराण में भी शिवजी का वाक्य है कि 'अहं दिशामि०' हे श्रीराम ! ब्रह्म का वाचक तुम्हारा तारक मन्त्र मैं देता हूँ श्रीराम, राम, राम यह तारक कहा जाता है । तब कैसे ॐकार ही प्रकृत में तारक है ?

उ० १—यदि पूर्वोक्त रामतापनी उपनिषद् में तारक षडक्षर कहा है तो पद्मपुराण के ... वाक्य में जो तारक का स्वरूप कहा है उसमें सात अक्षर क्यों हैं ? तथा अनन्तरोक्त "न वर्ण्यते...

इति प्रतिपदोक्तमेव प्रणवोपदेशः प्रतिपाद्यते किं च 'तारकं ब्रह्मे' ति श्रुतौ तारकपदस्य ब्रह्मपदसामानाधिकरण्यादपि तारकपदेन प्रणव एवोच्यते 'ओमित्येकाक्षरं ब्रह्मे' ति भगवद्गीतावाक्येन ब्रह्मप्रतीकतया ब्रह्मवाचकतया च ब्रह्मपदव्यवहारार्हस्य प्रणवस्यैवार्थानुगमसमन्वितत्वात्। अपि च प्रणवस्य सर्वमन्त्रशिरस्तया पूर्वोक्तराममन्त्रस्यापि प्रणवशिरस्कताया आवश्यकतया तदुपदेशेऽपि ब्रह्मतत्त्वसाक्षात्कारजनकतावच्छेकं रुद्रकर्तृककाश्यवच्छिन्नप्रणवोपदेशत्वमव्याहतमेवेति न कश्चिद्विरोधः। जाबालिश्रुतौ 'अत्र हि जन्तोः प्राणैरुत्क्रममाणस्ये'त्यपि क्वचित्पाठः। अथ काशीमृतानां पुण्यात्मनामस्तु नाम प्राणोत्क्रमणसमये तारकोपदेशः, परन्तु काशीकृतपापानामननुष्ठिततत्प्रायश्चित्तानां काश्यां प्राणोत्क्रमणस्य समय एव तारकोपदेशो भवति उत यातनाव्यवधानेनेति चेत्—अत्र सुरेशाचार्याः—"अत्र हि जन्तोः प्राणैरुत्क्रममाणस्य रुद्र-

भाषा

कैः०" इस उक्त काशीखण्ड के वाक्य में ॐकार सुनाते हैं, यह क्यों कहा गया ? और सनत्कुमार संहिता में '*अनिलोमृग०*' काशी में प्रणव 'ॐकार' के उपदेश समय में श्री शिवजी के वामार्ध (श्रीपार्वती) के अँचले के कस्तूरी से सुगन्धित वायु, मनुष्यों के मरण खेद को हरण करता है।

इस वाक्य में प्रणव मात्र का उपदेश क्यों कहा है ? इन विरोधों के परिहार के लिये यही व्यवस्था करनी पड़ेगी कि "*अहं दिशामिः०*" इस उक्त पद्मपुराण के वाक्य में उस सात अक्षर के मन्त्र को "यह लड़का सिंह है" इस वाक्य की नाईं तारक 'ॐकार' के सदृश समझ कर तारक कहा है। अर्थात् उस सात अक्षर के मन्त्र की प्रशंसामात्र है न कि उसका यही तात्पर्य है कि यही तारक मन्त्र है। और उसी से इस वाक्य में यह नहीं कहा है कि "यह तारक है" किन्तु यही कहा है कि "यह तारक कहा जाता है" उक्त रामतापनी उपनिषद् में जो काशी में षडक्षर मन्त्र का उपदेश कहा है उसका तात्पर्य यह है कि उस षडक्षर मंत्र का उपदेश आदि में 'ॐकार' लगाये बिना नहीं हो सकता। क्योंकि ॐकार सब मन्त्रों का शिर है तो जब षडक्षर का उपदेश होगा तब उससे पहले ही ॐकार का उपदेश होगा जिससे कि ब्रह्मज्ञान के द्वारा मोक्ष होगा, तो ऐसी दशा में इस षडक्षर मंत्र के उपदेश में भी ॐकार ही का उपदेश ब्रह्मज्ञान का कारण हुआ। और इसी से '*न वर्ण्यते कैः०*' और '*अनिलो मृग०*' इन काशीखण्ड और सनत्कुमार संहिता के उक्त वाक्यों में स्पष्ट रूप से ओंकार ही का उपदेश कहा है। और इसी कारण उक्त जाबालि उपनिषद् में भी केवल 'तारक' नहीं कहा है किन्तु 'तारक ब्रह्म' का उपदेश कहा है। क्योंकि 'ब्रह्म' नाम ओंकार ही का है। जैसा कि "*ओमित्येकाक्षरं ब्रह्म व्याहरन्*" ( ओं इस एक अक्षर के ब्रह्म को कहता हुआ ) इस भगवद्गीता में कहा है। इसलिये यह निर्णय है कि रामतापनी उपनिषद् में पूर्वोक्त आख्यायिका और पद्मपुराण के वाक्य का षडक्षर मंत्र के प्रशंसा मात्र में तात्पर्य है और उक्त पद्मपुराण के वाक्य में श्री शब्द प्रशंसा ही के लिये लगाया गया है न कि उसको मिलाकर मंत्र है और इसी रीति से उस मंत्र के छः ही अक्षर होते हैं जैसा कि रामतापनी उपनिषद् में कहा है। परन्तु वास्तविक में यही सिद्धान्त है कि काशी में मृत प्राणियों को श्रीविश्वनाथ जी ओंकार ही का उपदेश करते हैं। अब यह विचार किया जाता है कि काशी में मृत प्राणियों को कब ओंकार का उपदेश होता है ?

स्तारकं ब्रह्म व्याचष्टे" इत्यस्यायमर्थः—वाराणसीमध्यवर्त्तिनां मनुष्यातिरिक्तानां जङ्गमानां स्थावराणां च वाराणसीप्राप्तिस्थितिफलकारणानां पुण्यकर्मणां भूयस्त्वात्प्रारब्धेन शरीरेण क्रियमाणयोः पुण्यपापयोरसंभवात् प्रारब्धस्य कर्मणो भोगादेव क्षयात् प्राणप्रयाणसमये सर्वज्ञः सर्वशक्तिः सर्वान्तरर्यामी परमकारुणिकः परमेश्वरः स्वतः सिद्धमात्मरूपमविद्याप्रहाणादभि- व्यञ्जयति अवगमयतीति यावत् ।

तथा च श्रूयते—

यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु इति ॥

ईश्वरस्य सर्वशक्तिमत्वं च श्रूयते—

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ इति

मनुष्येषु ये जीवन्मुक्तास्तेषां प्राणोत्क्रमणं नास्ति "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्त" इति श्रुतेः। ते यत्र क्वापि निवसन्तः प्रारब्धकर्मक्षये विदेहकैवल्यं प्राप्नुवन्ति।

भाषा

इस विषय में पूज्यपाद स्वामी सुरेश्वराचार्य का यह व्याख्यान है कि जाबालि उपनिषद् के पूर्वोक्त प्रथम वाक्य में यह जो बात कही है "क्योंकि यहाँ प्राणी को प्राण निकलने के समय में रुद्र, तारक ब्रह्म का उपदेश करते हैं" इसका यह तात्पर्य्य है कि मनुष्य से अतिरिक्त काशी में रहने वाले पशु आदि जंगम और वृक्षादि स्थावर जीवों को, मरण के समय में सर्वज्ञ, सर्वशक्ति, सबके अन्तर्यामी, बड़े कारुणिक परमेश्वर, अज्ञान को नाश कर आप से आप सिद्ध आत्मा के स्वरूप का तारक के उपदेश द्वारा प्रत्यक्ष ज्ञान करा देते हैं क्योंकि काशी में उनकी स्थिति कराने वाले, पूर्वजन्म के पुण्य बड़े प्रबल होते हैं और उनके वर्तमान शरीर के कारण, पुण्य तथा पाप का इसी शरीर के द्वारा सुख और दुःख के भोग करने से नाश हो जाता है। और वे अपने इस वर्तमान शरीर से नवीन पुण्य और पाप नहीं कर सकते क्योंकि उनकी योनि ही केवल फलयोनि है न कि साधनयोनि, और उक्त कर्मों से अतिरिक्त उनके पूर्वजन्मों के संचित पाप कर्म, तारक उपदेश को नहीं वारण कर सकते क्योंकि उस उपदेश से तत्त्वज्ञान होने के कारण उन कर्मों का नाश हो जाता है अर्थात् उन्हीं संचित अनन्त कर्मकोशों के नाशार्थ ही तत्त्वज्ञान है और तत्त्वज्ञान से ही उनका नाश हो जाता है। इस रीति से उक्त प्राणी काशी में प्राण निकलने के समय ही में तारक के उपदेश सुनने के अधिकारी हो जाते हैं और काशीवासी मनुष्यों में भी जो ब्रह्मज्ञान से जीते ही मुक्त हैं उनके लिये काशी में शरीर छूटने पर भी तारक का भी उपदेश नहीं होता और न उपदेश से उनको प्रयोजन है क्योंकि *"न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते"* (जीवन मुक्त के प्राण नहीं निकलते किन्तु शरीरस्थ अन्य वायु ही में लीन हो जाते हैं ) इस वेदवाक्य के अनुसार निश्चित है कि वे चाहे जहाँ शरीर छोड़ें परन्तु उनके प्राण निकलते ही नहीं और उनके संचित कर्मों का, ब्रह्मज्ञान ही से नाश हो जाता है तथा प्रारब्ध कर्म तो सुख दुःख के भोग ही से नष्ट हो जाता है इस कारण शरीर छूटते २ उपदेश के बिना

ये सगुणब्रह्मोपासकाः ये च केवलं निरपेक्षाः सन्तः श्रुतिस्मृत्युक्तस्वस्ववर्णाश्रमोचितकर्मानुष्ठातारस्तेषां सर्वेषां चत्वारिंशत्संस्कारैरशेषैरसंस्कृतत्वेऽपि दयाक्षान्त्यादिभिरष्टभिरात्मगुणैर्युक्तानां काश्यां प्राणप्रयाणसमये पूर्वोक्तन्यायेन भगवान् परमेश्वरस्तारकं ब्रह्मोपदिशति अन्येषामप्यशेषाणां मनुष्याणां गङ्गावगाहनदेवदर्शनाभ्यां यज्ञदानतपोभिश्च यादृच्छिकैः पुराकृतैः सुकृतैः कर्मभिः।

ऊषरः पुण्यपापानां धन्या वाराणसी पुरी।

इदं प्रिये! क्षेत्रमति प्रियं मे संसारबीजोषरमूषराणाम्।

इति वचनाभ्यामूषरत्वेन प्रसिद्धस्य क्षेत्रस्य प्रभावेण च नष्टेभ्योऽवशिष्टानां पापकर्मणां काम्यस्य च पुण्यकर्मणः "मुक्तिमेकेन जन्मना" इति मुक्तेरवश्यंभावित्वात् प्रारब्ध एव शरीरे भोक्तव्यत्वोपपत्तेः काश्यां कृतयोः पुण्यपापयोरत्युत्कटत्वात्—

अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते।

इति वचनेन वर्त्तमान एव शरीरे भोक्तव्यत्वनियमात्तयोः पुण्यपापयोः फलदानाय।

भाषा

ही वे आप से आप मुक्त हो जाते हैं। और जो मनुष्य सगुण ब्रह्म के उपासक हैं अथवा जो उपासक नहीं हैं परन्तु श्रुति, स्मृति में कहे हुए अपने वर्ण और आश्रम के धर्म को प्रति दिन करते हैं तथा इन दोनों प्रकार के मनुष्यों में जो सत्य दया आदि गुणों से युक्त हैं उनको भी काशी में प्राण निकलने के समय ही में पूर्वोक्त रीति से भगवान् परमेश्वर, तारक मंत्र का उपदेश करते हैं। और अन्य मनुष्यों को भी काशी में मरण समय के अनन्तर, तुरत ही तारक का उपदेश होता है क्योंकि उनके वर्तमान जन्म के किये हुए पापों का भी उनके जीवन समय के अभ्यन्तर ही इसी रीति से क्षय हो जाता है कि बहुतेरे पाप उनके, गंगास्नान, देवदर्शन से और बहुतेरे यज्ञ, दान, तप से और बहुतेरे काशी क्षेत्र के प्रभाव से नष्ट हो जाते हैं। क्योंकि—"ऊषर" पुण्यों और पापों से फल उत्पन्न होने के लिये यह वाराणसी पुरी ऊषर है अर्थात् यहाँ किये हुए पुण्यों और पापों का फल नहीं मिलता इससे यह पुरी धन्य है।

"इदं प्रिये०" श्री शिवजी कहते हैं कि हे प्रिये (पार्वती)! संसार रूपी वृक्ष के बीज के लिये ऊसरों में अधिक ऊसर यह काशी क्षेत्र मेरा बड़ा प्यारा है। इन वाक्यों के अनुसार काशी पुण्य और पाप के लिये ऊसर है। और उक्त नष्ट पुण्य और पाप से अन्य जो बचे बचाये पाप और किसी फल की कामना से किये हुए पुण्य हैं उनका भी भोग वर्त्तमान ही शरीर में हो जाता है क्योंकि "मुक्तिमेकेन जन्मना" (काशी में एक ही जन्म से प्राणी मुक्ति पाता है) पुनः जन्म नहीं लेना पड़ता, इस पद्मपुराण के वाक्यानुसार जब मुक्ति अवश्य होने वाली है तब वर्त्तमान शरीर ही में अनन्तरोक्त पाप और पुण्य के फल का भोग होना उचित है। और काशी में किये हुए पुण्य और पाप, अति उत्कट (बड़े प्रबल) होते हैं इस कारण से भी उनका भोग वर्त्तमान ही शरीर में हो जाता है क्योंकि—

"अत्युत्कटैः०" इस स्मृति वाक्य में यह कहा है कि अति उत्कट पुण्य और पापों का इसी लोक

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।

इति वचनाभ्यां मायावी परमेश्वरः प्राणप्रयाणसमयात् पूर्वं क्षणेनैकेनैकानेकभविकेष्टानिष्ट-निखिलकर्मफलोपभोगयोग्यशरीरान्तरानुप्रवेशं माययैवोद्भाव्येष्टानिष्टान् स्वप्नकल्पान् भोगाननुभाव्य पश्चात् पूर्वोक्तन्यायेन तारकब्रह्मोपदिशतीत्यवश्यमेवाभ्युपगन्तव्यम् ।

तथा च सूतसंहितायाम्—

ईदृशी परमा निष्ठा गुरोः साक्षान्निरीक्षणात् ।
कर्मसाम्ये त्वनायासात्सिध्यत्येव न संशयः ॥ इति ।

कर्मसाम्ये कर्मणोः सुकृतदुष्कृतयोः फलभोगेन साम्ये सतीत्यर्थः । अन्यथा प्रत्यक्ष-श्रुतिविरोधात् "प्राणैरुत्क्रममाणस्ये"ति वर्तमानार्थविहितप्रत्ययसामर्थ्यात् "मुक्तिमेकेन जन्मने"ति वचनात् "अत्रैव मृतिमात्रेणे" त्यादौ मात्रशब्दप्रयोगबाहुल्यात् "कालेन चातो

भाषा

में फल मिलता हैं। इसलिये उक्त जाबालि उपनिषद् के वाक्य का यही अभिप्राय निश्चित है कि काशी में मरे हुए, जीवन्मुक्त से अन्य सब प्राणियों को मरण के अनन्तर तुरत ही तारक का उपदेश होता है।

प्र०—काशी में किये हुए अति उत्कट ऐसे पुण्यों और पापों का फल भोग कैसे जीवन समय ही में हो जाता है कि जिनमें से एक २ के फल भोग के लिये सहस्रों वर्ष का समय चाहिये?

उ०—माया के स्वामी परमेश्वर, मरण के समय के पूर्व ही अपनी माया के बल से कल्पित उन सब पापों और पुण्यों के फल फोग के योग्य, एक अन्य शरीर में उस जीव का माया ही से प्रवेश कल्पना कर स्वप्न के तुल्य, सुखों और दुःखों का क्षणमात्र में भी उस जीव को भोग करा कर, मरण के अनन्तर ही उस प्राणी को तारक का उपदेश करते हैं यही व्यवस्था इस विषय में उचित है। क्योंकि यदि ऐसा न हो तो पूर्वोक्त जाबालि उपनिषद् के साथ इस कारण विरोध पड़ जायेगा कि उसमें यह स्पष्ट कहा है कि "प्राण निकलते समय तारक का उपदेश होता है" तथा बहुत से आगे लिखे जाने वाले जो ऐसे पुराण वचन हैं जिनमें मरण के अनन्तर ही तारक का उपदेश कहा है उनके साथ भी विरोध पड़ जायेगा। जैसा कि *"मुक्तिमेकेन जन्मना०"* (काशी में एक ही जन्म से मुक्ति पाता है। *"अत्रैव मृतमात्रण"* (काशी में मृत होते ही सब प्राणियों को तारक का उपदेश करता हूँ।

*"कालेन चातो व्यवधानवन्ति०"* वाराणसी से अन्य तीर्थों में मरण के उपरान्त ही मुक्ति नहीं होती किन्तु कालान्तर में होती है और वाराणसी में मरण के अनन्तर ही मुक्ति होती है। इति। और मरण के अनन्तर श्री शिव के दर्शन तथा तारक के उपदेश से तत्क्षण मुक्ति होने का संभव भी अवश्य है जैसा कि सूतसंहिता में कहा है कि—

*"ईदृशी परमा०"* गुरु के साक्षात् दर्शन से यह उत्तम दशा ( मोक्ष ) प्राप्त होती है क्योंकि इसमें कुछ संशय नहीं है कि सुख और दुःख के भोग से पुण्य और पाप दोनों पूर्व ही से नष्ट हो चुके रहते हैं। और जो मरण के पूर्व एक ही क्षण में सब कर्मों के फलों का भोग कहा गया वह भी ठीक

व्यवधानवन्ति" इति वाराणसीमुक्तेः कालान्तरव्यवधानाश्रवणात् श्रुत्यनुगुणानामन्येषामपि भूयसां वचसां संभवाच्च—

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।
बालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः"

इति न्यायात् 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्ये रात्रिभोजनमन्तरेण पीनत्वानुपपत्तेर्यथा रात्रिभोजनं कल्प्यते तथैवात्रापि श्रुतिस्मृत्यन्यथानुपपत्त्या मुक्तिरेकेन जन्मना जन्तोरेष्टव्या । जाग्रत्स्वप्नयोः कर्मफलभोगे च न कश्चिद्विशेषोऽस्ति । 'तस्य त्रय आवसथास्त्रयः स्वप्नाः' इति श्रुतेः मायाविमोहितानां क्षणेनैकेन विग्रहान्तरपरिग्रहाद्विचित्राश्चानुभवाः श्रूयन्ते ।

उक्तं च वासिष्ठे—यथा स्वप्ने मूहूर्ते स्यात् संवत्सरशतभ्रमः ।
तथा मायाबलादेव जायते जाग्रति भ्रमः ॥

संक्षेपशारीरके—सुप्तो जन्तुः स्वल्पमात्रेऽपि काले कोटीः पश्येद्वृत्तसंवत्सराणाम् ।
कोटीः पश्येदेवमागामिकानां जाग्रत्काले योजयेत्सर्वमेतत् ॥

शैवागमेऽपि—कपालमिन्दुः करिचर्मनागाः काशीपुरी कण्ठगतस्य जन्तोः ।
मूर्च्छासु मूर्च्छासु परिस्फुटन्ति संज्ञासु संज्ञासु तिरो भवन्ति ॥

काशीखण्डेऽपि—कृत्वा कर्माण्यनेकानि कल्याणानीतराणि च ।
तानि क्षणात्समुत्क्षिप्य काशीसंस्थोऽमृतो भवेत् ॥

भाषा

है क्योंकि स्वप्न और जागरण के भोगों का वर्तमान दशा के अनुसार अन्योन्य में कोई विशेष नहीं होता और माया से मोहित पुरुषों का शरीरान्तर के धारण द्वारा सुख और दुःखों के विचित्र अनुभव, अनेक स्थानों पर सुने जाते हैं जैसे कि योगवासिष्ठ में—

"यथा स्वप्ने" जैसे स्वप्न में मुहूर्त मात्र मी सौ वर्ष ज्ञात होता है वैसे जागने में मी कदाचित् माया ही के बल से बहुत थोड़े से काल में बहुत बड़े काल का भ्रम होता है । और संक्षेपशारीरक में कहा है कि—

"सुप्तो जन्तुः०" जैसे सोया मनुष्य, थोड़े से काल में करोड़ों व्यतीत वर्षों को देखता है तथा करोड़ों आगामी वर्षों को देखता है वैसे ही जागरण काल में भी माया के बल से वैसा ही भ्रम कदाचित् हो जाता है । और शैवागम में मी कहा है कि—"कपालमिन्दुः०" काशीपुरी में कण्ठगत प्राण होने के समय प्राणी की प्रत्येक मूर्च्छाओं में कपाल, चन्द्रमा, गजचर्म और नाग ( सर्प विशेष) प्रकाश होते हैं अर्थात् वह जन्तु अपने को शिव रूपी देखता अथवा श्री शिव को देखता है—और संज्ञाओं ( चैतन्यों ) में वे कपालादि गुप्त हो जाया करते हैं । तथा काशीखण्ड में कहा है कि "कृत्वा कर्माण्य०" अनेक पुण्य और पाप कर काशी में मृत्यु के समय उन सब कर्मों को क्षण मात्र में निकाल कर, प्राणी मोक्ष पाता है । पापों के बड़े २ राशियों को नाश करने वाली, पुण्य को बढ़ाने वाली, जीवन समय में भोग और मरण के अनन्तर मोक्ष देने वाली, काशी को ऐसा कौन बुद्धिमान् है कि

महापापौघशमनीं पुण्योपचयकारिणीम् ।
भुक्तिमुक्तिप्रदामन्ते को न काशीं सुधीः श्रयेत् ॥

सनत्कुमारसंहितायाम्—

अत्रैव पापैः सह चेन्मृतोऽसौ न जन्ममृत्यू लभते त्ववश्यम् ।
कालेन मे यामगणैः फलेषु नियोजितस्तत्सकलं प्रभुज्य ॥
अल्पेन कालेन समस्तमेव सार्द्धं पुरा रुद्रपिशाचरूपैः ।
तव प्रसादेन कृतोपदेशः पिशाचयोनेरपि मुक्तिमेति ॥
यथाऽत्र पुण्यं कृतमक्षयं स्यात् तथात्र पापं न तयोर्विशेषः ।

इति तु स्तुतिनिन्दार्थवादः अन्यथा सर्वेषां मनुष्याणां पुण्यपापयोरल्पयोः संभवात् रक्षयत्वस्वीकारे न कस्यापि मुक्तिः स्यात् तदत्र मुक्तिप्रतिपादिकयोः श्रुतिस्मृत्योर्वैयर्थ्यं स्यात् अतः काश्यां कश्चित्कालमुषित्वा बहिर्गत्वा यो म्रियते तद्विषयमेव तदित्यवगन्तव्यम्

वाराणस्यां कृतं पापं वज्रलेपो भविष्यति ।

इत्यपि वचनं तथैव मन्तव्यम् अथ पापकर्मा कश्चित्काश्यां म्रियते पुण्यकर्मा बहिर्म्रि इति कथमिति चेत् नैवं विज्ञानवद्भिर्विचारणीयम् एकस्मिन्नेव जन्मनि कृतयोः पुण्यपापयोः परिच्छेत्तारो हि वयम् अनादौ संसारे मनोवाक्कायैः कृतयोः पुण्यपापयोः परिच्छेत्ता तु महे एव तथा च अगस्त्यं प्रति स्कन्देनोक्तम् ।

भाषा

जो अवकाश मिलने पर अन्त काल में आश्रयण न करे । और यह पूर्वोक्त प्रकार सनत्कुमार संहि में स्पष्ट ही कहा है कि—"अत्रैव पापैः०" श्री कालभैरव ने श्री विश्वनाथ जी से कहा कि काशी में यदि कोई पाप के साथ मरा तो भी वह कदापि जन्म और मृत्यु नहीं पाता किन्तु मे गणों से नियोजित होकर रुद्रपिशाच हो उन सब पापों के फलों को थोड़े से काल में भोगकर आप तारकोपदेश करने के कारण पिशाच योनि से भी छूट कर मोक्ष पाता है ।

प्र०—"यथात्र पुण्यं०" काशी में किया हुआ पुण्य जैसे अक्षय होता है वैसे ही यहाँ कि हुआ पाप भी अक्षय होता है । इस वाक्य की क्या गति होगी ?

उ०—यह वाक्य, स्तुति और निन्दा का अर्थवाद मात्र है क्योंकि यदि ऐसा न माना जा तो काशी के मृत मनुष्यों में से कोई ऐसा न होगा कि जिसके पुण्य और पाप कुछ भी भोग से अवशि न हों, इसलिये यहाँ किसी मनुष्य की मुक्ति ही न होगी । तब यहाँ मनुष्य के मुक्ति को प्रतिपाद करने वाले पूर्वोक्त वेदवाक्य और पुराण आदि के वाक्य, सब व्यर्थ ही हो जायँगे । इसलिये यह निश्चय है कि जो मनुष्य कुछ काल तक काशी में रह कर प्रारब्धवश बाहर जाकर शरीर छोड़ता उसी के विषय में यह वाक्य हैं । और ऐसे ही "वाराणस्यां कृतं पापं०" वाराणसी में किया हुआ पाप वज्रलेप होता है, यह वाक्य भी उसी विषय में है ।

प्र०—यह कैसे होता है कि बहुत से पापी भी काशी में मरते हैं और बहुत से धर्मात्मा भी काशी से बाहर जाकर मरते हैं ।

ब्रह्मवैवर्त्ते—न ज्ञायते सूक्ष्मतरं हि किंचित्, कर्मास्ति लोकस्य सुदुर्विभाव्यम् ।
योगादियज्ञादितपोभिरुग्रैर्युक्तस्य ते संप्रति नास्ति काशी ॥
न ज्ञायते कस्य किमस्ति पुण्यं स्वल्पोऽपि काश्यां तनुभृत्सदाऽऽस्ते ।
देवादयोऽपि प्रभवन्ति नैव स्थातुं क्षणं काशिकायां किमन्ये ॥

अतः कृतप्रयत्नसापेक्षस्तारकं ब्रह्मोपदिशतीत्यवगन्तव्यम् अन्तरं बहिः करोतीति च प्रतिनियतैव वस्तुशक्तिर्यथा वह्नेर्दाहशक्तिः तथा काश्यां मोचकशक्तिः प्रतिनियतैव तथा च—

पाद्मे—यथा शुक्तौ पयोवाहात्पतिता जलविन्दवः ।
मुक्ताः स्युः संस्थिताः काश्यां तथा सर्वेऽपि जन्तवः ॥
कीटाः पतङ्गा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः ।
मण्डूकमत्स्याः कृमयोऽपि काश्यां त्यक्त्वा शरीरं शिवमाप्नुवन्ति ॥
पुण्यानि पापान्यखिलान्यशेषम् सार्थं सवीजं सशरीरमार्ये ।
इहैव संहृत्य ददामि बोधम् यतः शिवानन्दमवाप्नुवन्ति ॥
सूच्यग्रमात्रमपि नास्ति ममास्पदेऽस्मिन् स्थानं सुरेश्वरि मृतस्य न यत्र मोक्षः ।
भूमौ जले वियति वाऽशुचिमध्यतो वा सर्पाग्निदस्युपविभिर्निहतस्य जन्तोः ॥

भाषा

उ०—ऐसा विचार, बुद्धिमान् को नहीं करना चाहिये क्योंकि एक ही जन्म के किये हुए पुण्यों और पापों का निश्चय हम कर सकते हैं और इस जन्म मृत्यु के प्रवाह रूपी अनादि संसार में मन, वचन और शरीर से किये हुए सब पुण्यों और पापों का निश्चय करने वाले तो, विश्वेश्वर ही हैं जैसा कि ब्रह्मवैवर्तपुराण में अगस्त्य ऋषि से श्री स्वामिकार्तिकेय ने कहा है कि—

"न ज्ञायते०" लोगों के कर्म कोई २ ऐसे भी सूक्ष्म होते हैं कि जिनका ज्ञान महात्मा जीवों को भी कदापि नहीं हो सकता। देखिये ! ऐसे उग्र योग आदि यज्ञ आदि और तपस्याओं से आप भरे हुए हैं तथापि इस समय आप के लिये काशी नहीं है। यह नहीं ज्ञात होता कि किसका क्या पुण्य है ? क्योंकि छोटे से छोटे कीट पतंगादि भी काशी में सदा रहते हैं और दूसरों की क्या कथा है ? देवता आदि भी काशी में क्षण मात्र भी नहीं रह सकते।

इसलिये यही निश्चय है कि अनेक जन्मों के किये हुए पुण्यों को समझकर श्री विश्वेश्वर, प्राणियों को काशीवास, काशीमरण, तारकोपदेश देते हैं। और जैसे अग्नि आदि वस्तुओं में दाह आदि करने की शक्ति है वैसे ही काशी में तारकोपदेश के द्वारा, मृत प्राणियों को मोक्ष देने की शक्ति है। जैसा कि पद्मपुराण में कहा है कि—

"यथा शुक्तौ०" जैसे स्वाती नक्षत्र पर जब सूर्य रहते हैं उस समय सागर की सीपियों में मेघ से गिरे हुए जलविन्दु 'मुक्ताः' (मोतियाँ) हो जाते हैं वैसे काशी में मरे हुए सब प्राणी (मुक्ताः) मुक्ति को प्राप्त हो जाते हैं। जल अथवा स्थल के जितने प्राणी, मेढक, मछली आदि अथवा कीट, पतङ्ग, मशक और वृक्ष आदि जीव हैं वे यदि काशी में शरीर छोड़ें तो श्री शिव को पाते हैं। तथा श्री शिवजी ने श्री पार्वतीजी से कहा है कि हे आर्ये ! सब पुण्यों और पापों तथा शरीर को इसी काशी-

स्थिराकाश्यामिहैवैका प्रतिज्ञा हि मया कृता ।
अत्रैव मृतिमात्रेण तिरश्चामपि देहिनाम् ॥
भक्तानामप्यभक्तानां पुण्यपापात्मनामपि ।
मुक्तिं दास्यामि सर्वेषां भक्तानामेव तां बहिः ॥
विनापि योगैः सहितोऽपि भोगैः विनापि पुण्यैः सहितोऽपि पापैः ।
मृतः प्रयात्येव हि यत्र तत्र मामेव निर्दग्धसमस्तदोषः ॥
अन्यत्रापि—अत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म जन्तूनामपवर्गदः ॥

सनत्कुमारसंहितायाम्—
महात्मनां वापि तपोधनानाम् शापो मुनीनामपि यत्र भग्नः ।
तत्क्षेत्रमासाद्य महद्युनद्याः पिबन्पयोऽप्यत्र वसन् कृतार्थः ॥
योगोऽत्र निद्रा क्रतवः प्रचाराः स्वेच्छाऽऽसनं देवि महानिवेद्यम् ।
लीलाऽत्मनो देवि पवित्रदानम् जपः प्रलापः शयनं प्रणामः ॥
मोक्षं सुदुर्लभं मत्वा संसारं चाति भीषणम् ।
अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥
तथा—इदं कलियुगं घोरं सम्प्राप्तं पाण्डुनन्दन ।
गतिमन्यां न पश्यामि मुक्त्वा वाराणसीं पुरीम् ॥

भाषा

क्षेत्र में नाश कर मैं प्राणियों को ब्रह्मज्ञान देता हूँ, जिससे वे प्राणी शिवानन्द ( मोक्ष ) पाते हैं और हे सुरेश्वर ! मेरे इस पाताल से लेकर सत्यलोक पर्यन्त पाँच कोश के मण्डल-रूपी स्थान में, भूमि, जल, और आकाश, मल, मूत्र आदि से अपवित्र भी सूची के अग्र मात्र भी कोई ऐसा स्थान नहीं है कि जिसमें सर्प, अग्नि, डाँकू, बिजुली आदि के द्वारा दुष्ट मृत्यु से भी मरे हुए किसी प्राणी को मोक्ष न हो । क्योंकि एक इसी काशी ही में मैंने यह अटल प्रतिज्ञा किया है कि भक्त अथवा अभक्त तथा धर्मात्मा या पापात्मा कीट, पतङ्ग पर्यन्त प्राणियों को यहाँ मरते ही मैं मोक्ष दूँगा और यहाँ से अन्यत्र तो भक्तों ही को मोक्ष देता हूँ । ऐसा ही अन्यत्र भी कहा है कि—

"अत्र साक्षा०" मोक्ष देनेवाले स्वयं ईश्वर महादेव, यहाँ काशी में देहान्त के समय प्राणियों को तारक ब्रह्म का साक्षात् उपदेश देते हैं । और सनत्कुमारसंहिता में भी कहा है कि "महात्मनां०" व्यास आदि तपस्वी महात्मा मुनियों का भी शाप जहाँ टूट (निष्फल हो) गया है उस महाक्षेत्र काशी में बस कर गंगाजल पीता हुआ मनुष्य कृतार्थ हो जाता है । योग से रहित और भोग के सहित भी तथा धर्म से रहित और पापों के सहित भी प्राणी क्यों न हो परन्तु इस क्षेत्र में जहाँ तहाँ मर कर सब दोषों का नाश कर मुझको पाता है । हे देवि ! इस क्षेत्र में निद्रा ही योग है, चलना ही यज्ञ है, बैठना ही नैवेद्य है, विलास ही पवित्र दान है, बोलना जप है, लेटना प्राणायाम है, मोक्ष को दुर्लभ और संसार दुःख को भयानक समझ कर मनुष्य को चाहिये कि पत्थर से चरणों को तोड़ कर वाराणसी

जपध्यानविहीनानां ज्ञानवर्जितचेतसाम् ।
व्रतस्वाध्यायहीनानां गतिर्वाराणसी नृणाम् ॥
अस्यत्यसिर्वारयति प्रवेशे कर्माणि जन्तोर्वरणा वरेण्या ।
वाराणसी मध्यगता तयोश्च निःशेषयत्यूषरता प्रभावात् ॥
अनिदमुदयमाद्यं धामवामार्द्धकान्तम्,
स्वमहिमरसिकत्वात्स्वानुभूत्येकमानम् ।
अनवरतमपास्तद्वैतमात्मावबोधम्,
प्रकटयति पशूनां कालपाकेन काश्याम् ॥
जन्मान्तरसहस्रेषु मोक्षो भवति वा न वा ।
काश्यान्तु लभते जन्तुर्मुक्तिमेकेन जन्मना ॥
गर्भाधानाद्यखिलमपि यत्कर्म जातं द्विजाना-
मेकं न्यूनं मुनिमपि मुने पातयिष्यत्यवश्यम् ।
नो चेत् स्वर्गादिषु फलमदः सर्वशास्त्रे प्रसिद्धम्
तस्मात् काश्यां कथमपि वसेद्बुद्धिमान् मुक्तिसिद्ध्यै ॥
तीर्थानि सर्वाण्यपि मोक्षदानि श्रुतानि शास्त्रेष्वखिलेषु राजन् ।
वाराणसी प्राप्तिफलानि शीघ्रम् कालेन चातो व्यवधानवन्ति ॥

भाषा

में बसै । तथा सनत्कुमारसंहिता ही में युधिष्ठिर के प्रति ऋषि ने कहा है कि—हे पाण्डुनन्दन ! यह घोर कलियुग प्राप्त हुआ । अब मैं वाराणसी पुरी को छोड़ कर दूसरा शरण नहीं देखता क्योंकि जप और ध्यान से रहित तथा ज्ञान से वर्जित तथा व्रत और वेदाध्ययन से हीन मनुष्यों की गति वाराणसी है । और वाराणसी में प्रवेश करने वाले प्राणी के कर्मों को असी नदी निकालती है और वरणा नदी उन कर्मों को वाराणसी में जाने से वारण करती है तथा उन नदियों के मध्य में स्थित वाराणसी पुरी अपनी ऊसरता के प्रभाव से उन कर्मों का समूल नाश कर देती है । और सबका आदि कारण, स्वप्रकाश, ज्ञान और आनन्द रूप तथा नित्य और अद्वैत तथा वामार्द्ध में स्त्री, दक्षिणार्द्ध में पुरुष, वह चैतन्य रूपी तेज ( पशुपति ) काशी में मरते हुए पशु रूपी जीवों के लिये अपने को प्रकट कर देते हैं । और सहस्रों जन्मों में किसी को मोक्ष मिलता है वा नहीं, पर काशी में तो प्राणी एक ही जन्म से मोक्ष पाता है । और यह बात सब शास्त्रों में प्रसिद्ध है कि "गर्भाधान आदि सब कर्म जो कि त्रैवर्णिकों के लिये किये जाते हैं उनमें से एक भी यदि न्यून हो तो उसके बदले त्रैवर्णिकों को परलोक में अवश्य ही दुःख झेलना पड़ता है और यदि किसी भाग्य से वे सब कर्म पूरे पड़ जायँ तो भी उनसे स्वर्ग आदि ही फल मिलते हैं जो कि सदा स्थिर नहीं रहते" इसलिये बुद्धिमान् को चाहिये कि किसी प्रकार से काशी में अवश्य सदा वास करे ।

"*तीर्थानि०*" हे राजन् ! शास्त्रों में बहुत से तीर्थ, मृत प्राणियों को मोक्ष देने वाले सुने जाते हैं परन्तु उनमें मरण से तुरत मोक्ष नहीं होता किन्तु तुरत ही एक जन्म ऐसा होता है कि जिसमें

इति व्याचख्युः । सारस्वतपाठकहरिकृष्णास्तु (आषा० कृ० ३ बुधे सं० १९३१) स्वनिर्मि काशीतत्त्वविचारे श्रीसदाशिवदक्षिणामूर्तिपरमानुग्रहलब्धतारकमन्त्रोपदेशानां काशीमृतान तादृशमन्त्रश्रवणमात्रेण तत्क्षण एव ब्रह्मात्मैक्यसाक्षात्कारान्मुक्तिर्भवतीति तावदुत्सर्गः न मननिदिध्यासनाभ्यां विना श्रवणमात्रात्कथं साक्षात्कार इति वाच्यम् असंभावना विपरी भावनात्मकपुरुषापराधमार्जन एव तयोरुपयोगः साक्षात्कारस्तु श्रवणादेवेति सिद्धान्त "आत्मा वा अरे द्रष्टव्यः" इत्यादिश्रुतावात्मदर्शनमुद्दिश्य पूर्वं श्रोतव्यः, इति श्रवणमा विधीयते अनन्तरं चाधिकारितारतम्यमनुसन्धाय 'मन्तव्यो' 'निदिध्यासितव्य' इति मनन निदिध्यासनं च । तत्र चोत्तमोऽधिकारी जनकादिरिव श्रवणमात्रेण साक्षात्कारी भवति मध्यमस्तु मननमप्यपेक्षते इतरो निदिध्यासनमपि न तु सर्वत्र त्रयमेव विधित्सितम् तथा न्तानां पृथगुपादानात् तदर्थमेव च प्रदेशान्तरे "आत्मेत्येवोपासीते" त्युपासना विधीय काश्यां तु निरुपधिकरुणावरुणालयो भगवान् स निदधदेव क्षपिताशेषप्राणिकल्मषरा स्वयं सन्निहितो भूत्वा तारकमुपदिशतीत्यसंभावनाद्यङ्कुरोदयस्य कैव कथा । लोकेऽपि चो देष्टरिपरमाप्तत्वेन गृहीते सति न श्रोतृणां संशयादेरवसरो भवति श्रुतिश्च "येनासावमृती भूत मोक्षी भवती"ति तारकोपदेशमात्रेण साक्षात्कारान्मोक्षमाह अमृती भूत्वेत्यस्य हि लब्धसाक्षा

भाषा

अन्तकाल में काशी मिलती है जिससे कि तुरत ही मोक्ष होता है । यह व्याख्यान श्री सुरेश्वराचा जी का है । और उनके पश्चात्कालिक अन्य पण्डितों की तारकोपदेश के विषय में यह व्यवस्था कि यह सामान्य बात है कि काशी में मृत जन्तुओं को श्री सदाशिव के परम अनुग्रह से तारक मं को श्रवण करते ही तत्क्षण ब्रह्म और जीव की एकता प्रत्यक्ष होने से मोक्ष हो जाता है ।

प्र०—उक्त मंत्र के श्रवण मात्र से कैसे ब्रह्म और जीव की एकता प्रत्यक्ष होती है ? क्योंकि श्रवण के अनन्तर मनन ( अनुमान और तर्क ) और तदनन्तर, निदिध्यासन ( ध्यानधारा ) से उस प्रत्यक्ष का होना वेदान्त वाक्यों में कहा है ।

उ०—यह सिद्धान्त है कि उक्त प्रत्यक्ष, वेदान्त वाक्य के श्रवण मात्र से होता है परन्तु कि श्रोता को श्रवण के पश्चात् भी यह शंका रह जाती है कि जीव, कैसे ब्रह्म ही है ? उसके लिये उस शंका के वारणार्थ मनन का उपयोग है और जिसको मनन करने पर भी "जीव ब्रह्म से भिन्न है" यह लौकिक वासना पूर्ण रूप से नहीं छूटती उसके लिये निदिध्यासन का भी उपयोग है । इस सिद्धान्त के अनुसार सब श्रोताओं के लिये श्रवण ही का वेदान्तों में विधान है और मध्यम अधिकारी श्रोता के लिये मनन का भी तथा अधम अधिकारी श्रोता के लिये निदिध्यासन का भी । और काशी में तो करुणा वरुणालय भगवान श्री सदाशिव के दर्शन होते होते काशी के मृत प्राणी का सब पापराशि समूल नष्ट हो जाता है तो ऐसी दशा में किसी प्रकार की शंका के अंकुर का भी क्या संभव है इसलिये मनन और निदिध्यासन का कोई प्रयोजन नहीं पड़ता किन्तु तारक के श्रवण मात्र से उस प्रत्यक्ष हो जाता है । इसी से जाबालि उपनिषद् के उक्त प्रथम वाक्य में तारक के उपदेश मात्र से ब्रह्मज्ञान हो कर मोक्ष कहा है ।

त्कारो भूत्वेत्यर्थः यद्वा काश्यां मरणस्य मङ्गलरूपत्वात्तत्र मरणादिपदप्रयोगो नोचित इति बोधयितुम् अमृती भूत्वेत्युक्तम् तच्च त्यक्तदेहो भूत्वेत्यर्थकम् अथ तारकोपदेशेन मुक्तीभावेऽप्युपपन्ने किमित्यौत्सर्गिकत्वमास्थीयत इति चेत् न वयं मुक्त्यभावं कस्यचिदभिप्रेमः किन्तु काश्यां देहत्यागस्याव्यवहितोत्तरक्षणे व्यवहिते च काले यथायथमधिकारिभेदेन मुक्तिरित्येव व्यवधानं च तीव्रपातकिनां रुद्रपिशाचभोगप्रयुक्तम् "यातनाऽन्ते दिशेन्मति" मित्यादिवाक्यैर्यातनावसान एव तारकोपदेशबोधनात् तच्च भोगकथनं नान्यथा नेतुं शक्यते भूयस्तु प्रदेशेषु स्थितत्वादभ्यासगतिसामान्यत्वाभ्यामभ्यासे चार्थभूयस्त्वमिति न्यायेन प्रबलत्वात् अभ्यास आवृत्तिः गतिसामान्यत्वं चानेकपुराणसंप्रतिपन्नत्वम् ।

तथाहि पाद्मे तावत्—अस्यां निवासो निर्वाणं साधयत्यंजसा मुने ।
अधर्मिष्ठस्य तत्क्षेत्रे यातनाऽन्ते दिशेन् मतिम् ॥
वाराणस्यां निवसतिरपवर्गफलप्रदा ।
द्वित्राणां च पवित्राणां कल्पते सत्वरं बले ॥ इति ॥

सत्वरं देहपातसमनन्तरक्षणे—

काशीखण्डे—वाराणस्यां स्थितो यो वै पातके पुरतः सदा ।
योनिं प्राप्यापिशाचीं वर्षाणामयुतत्रयम् ॥

भाषा

प्र०—जब तारकोपदेश से मोक्ष का होना वेदवाक्य में स्पष्ट ही कहा है तब क्यों यह कहा जाता है कि "तत्क्षण मोक्ष होना सामान्य बात है ।" क्योंकि इस कथन से यह ज्ञात होता है कि कोई और भी विशेष बात है ।

उ०—"सामान्य बात है" इस कथन का यह अभिप्राय है कि काशी में मृत प्राणियों की मुक्ति अवश्य होती है परन्तु विशेष इतना ही है कि किसी मनुष्य को मरते ही मुक्ति होती है और किसी को कुछ काल के व्यवधान से, और व्यवधान का कारण, बड़े पापियों को रुद्रपिशाच होकर यातना का भोग ही है । क्योंकि "*यातनान्ते दिशेन्मतिम्*" इत्यादि वाक्यों से यही निश्चय होता है कि यातना भोग के अनन्तर, तारक का उपदेश होता है । और ये यातना भोग के वाक्य ऐसे हैं कि जिनका अर्थ किसी प्रकार से बदला नहीं जा सकता क्योंकि यह यातना भोग अनेक पुराणों के अनेक स्थानों पर अनेक वार स्पष्ट रूप से कहा हुआ है जैसा कि पद्मपुराण में ।

"*अस्यां०*" हे मुने ! इस काशी में निवास, अवश्य ही मोक्ष का कारण है परन्तु विशेष इतना ही है कि काशीमृत के पूर्व धर्मों की केवल अपेक्षा कर श्री शिवजी, तारक का उपदेश करते हैं अर्थात् इस क्षेत्र में तीक्ष्ण पापों को कर, मरने वाले को यातना के अन्त में तारक का उपदेश होता है । वाराणसी में वास करने और मरने से दो वा तीन अर्थात् बहुत थोड़े पवित्र जीवों को मरते ही मोक्ष मिलता है । और काशीखण्ड में भी कहा है कि—

"*वाराणस्यां०*" जो पुरुष, वाराणसी में अधिक से अधिक पाप ही जीवन भर कर चुका है वह भी काशी में मरण के अनन्तर, अपने उस पाप कर्म के अनुसार काशी ही में अधिक से अधिक

पुनरत्रैव निवशन् ज्ञानं प्राप्स्यत्यनुत्तमम् ।
तेन ज्ञानेन संप्राप्ते मोक्षमाप्स्यत्यनुत्तमम् ॥ इति ॥

संप्राप्ते सम्यग्भोगान्ते—

ब्रह्मवैवर्त्ते च—हिरण्यगर्भनाम्नः कस्यचित् दाम्भिकपाशुपतस्यानेकविधदुष्कृतकर्तुर्नि निर्भत्सनपूर्वककालराजदत्तायुतत्रयसंवत्सरव्यापि यातनाभोगानन्तरदण्डपाणिकृतप्राप्त्यभ्य नन्तरं महादेवेन तारकोपदेशः कृतः इति ।

यातनान्तकालिकोपदेशः स्पष्टमाख्यायते । काशीखण्डेऽपि दण्डपाणये वरप्रदान समये तस्मै यातनाप्रदानाधिकारसमर्पणं स्मर्यते अतो यातनाभोगान्त एव पापिनां तारको पदेशः । एवम् काश्यां सुकृतस्याप्यक्षयत्वस्मरणात्तुल्ययुक्त्या भोगवासनावतां सुकृतिन कैलासप्राप्तिभगवत्सारूप्यप्राप्तिपूर्विका विदेहकैवल्यप्राप्तिः उपदेशस्तु तेषामुत्क्रमण का एव । तत्प्रतिबन्धकपापाभावात् तावत्कालं च जीवन्मुक्तत्वेन तेषामवस्थाने विरोधाभावात् अत एव काशीखण्डे—

महानन्दनाम्नो द्विजस्य चाण्डालदत्तप्रतिग्रहेण प्राप्तकाशीपरित्यागस्य सकुटुम्बस कीकटदेशगतस्य तत्रैव मृतस्य कुक्कुटजन्मान्तरं काशीं प्राप्य मृतस्य कैशासप्राप्तिः स्मर्य तट्टीका कृता च 'भोगवासनाप्राबल्यादस्य तथाविधागतिरिति समाधीयतेस्म तथा तत्रैव—

भाषा

तीस सहस्र वर्ष तक पिशाचयोनि पाकर यातना को भोग करता है । तदनन्तर तारकोपदेश मोक्ष पाता है ।

तथा ब्रह्मवैवर्त में स्पष्ट ही कहा है कि अनेक पाप के कर्ता हिरण्यगर्भ नामक दाम्भि शैव को श्री कालभैरवं की दी हुई तीस सहस्र वर्ष यातना के अनन्तर श्री महादेव ने तारकोपदेश किया

तथा काशीखण्ड में स्पष्ट ही कहा है कि श्री शिवजी ने कालभैरव को, यातना देने अधिकार दिया । इन सब वाक्यों से यह सिद्ध है कि काशी के पापियों को यातनाभोग के अन ही में तारक का उपदेश होता है ।

ऐसे ही स्मृतिवाक्यों से यह भी सिद्ध है कि काशी में किया हुआ पुण्य भी अक्षय ही होत हैं । इसलिए काशी के धर्मात्मा को यदि मरते समय भोग की इच्छा अवशिष्ट रह जाय तो उसक कैलासवास के अनन्तर भगवान् का सारूप्य होता है । तदनन्तर विदेह मोक्ष होता है । कि तारक का उपदेश उसको मरण समय में हीं होता है क्योंकि उसमें पाप नहीं रहता तथा मरण अनन्तर और विदेहमोक्ष से पूर्व वह जीवन्मुक्ति की दशा में रहता है । इसी से काशीखण्ड में महान ब्राह्मण को, काशी में चाण्डाल के दान लेने से काशीत्याग के अनन्तर मगध से मृत्यु पाने के पश्चा कुक्कुट (मुर्गा) जन्म के अनन्तर काशीमरण से कैलास की प्राप्ति कही हुई है और उस पर उन टीकाकारों ने यह समाधान किया है कि काशीमृत्यु के समय उस ब्राह्मण को भोग की इच्छा थी इसी से उसको कैलास की प्राप्ति हुई और ऐसा ही काशीखण्ड में कहा भी है कि—

वाराणसी स्फुरदसीमगुणैकभूमिर्यत्र स्थितास्तनुभृतः शशिभृत्प्रभावात् ।
सर्वे गले गरलिनोऽक्षियुजो ललाटे वामार्द्धवामतनवोऽतनवस्तथान्ते ॥
काशीपुरीपरिसरे मणिकर्णिकायां त्यक्त्वा तनुं तनुभृतस्तनुमाप्नुवन्ति ।
भाले विलोचनवतीं गलनीललक्ष्मीं वामार्द्धबन्धुरवधू विधुरावरोधाः ॥इति॥

विधुरावरोधाः गतावरज्ञानाः "पञ्चास्यो वाऽथ जायते" इत्यादिवचनात्। 'द्वित्राणामि'त्युक्तवचनस्वारस्याच्च यथोक्तमेव साधु। नीलकण्ठचतुर्द्धरकृते मन्त्रकाशीखण्डेऽपि (छन्दत उभयाविरोधात्) (वेद० अ० ३ पा० ३ पू० २) इति सूत्रमुपन्यस्य 'यद्युपासकः पूर्ववासनया भोगमनुरुध्यते तदा ज्ञाततत्वोऽप्ययं जीवन्मुक्तवत् समनस्कत्वाद्भोगान्भोक्तुं गतिमनुरुध्यते यदि निर्वासनस्तर्हि निर्मनस्कत्वात्सद्यः कैवल्यमश्नुत इत्युभयाविरोधादिच्छयाऽत्र गत्यगती ज्ञेये' इति ग्रन्थेनायमेवार्थः समर्थितः ।

अत एवोक्तं शिष्टैः—

काश्यां शरीरं त्यजतामवश्यं शरीरिणां नास्ति पुनः शरीरम् ।
यद्यस्ति कण्ठे गरलं ललाटे विलोचनं चन्द्रकला च मौलौ ॥ इति ॥

भाषा

"*वाराणसी०*" वाराणसी के गुणों को कहां तक कहा जाय कि जहाँ के मृत सब प्राणी गले में विष और ललाट में नेत्र तथा वामार्द्ध में स्त्री को धारण करते हैं और अन्त में उस शरीर से भी रहित हो जाते हैं और पुनः भी कहा है कि काशी पुरी के प्रान्त में मणिकर्णिका पर शरीर छोड़ने वाले प्राणी ब्रह्मज्ञानी होकर ऐसा शरीर पाते हैं कि जिसके ललाट में नेत्र और गले में कालिमा तथा वामार्द्ध में सुन्दरी वधू रहती है । ऐसे ही "*पञ्चास्यो वाऽथ जायते*" अथवा काशी में मरने से पंचवक्त्र (पाँचमुख) हो जाते हैं इत्यादि कहा हुआ है । तथा "दो तीन पवित्र प्राणियों के काशी में मरण से क्षण में मुक्ति होती है" इस पूर्वोक्त वाक्य पर भी अनन्तरोक्त व्यवस्था ही ठीक है ।

पण्डित नीलकण्ठचतुर्धर ने भी 'मन्त्र काशी खण्ड' में अनन्तरोक्त व्यवस्था का ही समर्थन किया है क्योंकि उन्होंने "*छन्दत उभयाविरोधात्*" इस सूत्र को लिख कर इसके अर्थ के अनुसार यह कहा है कि काशी में मृतपुण्यात्मा उपासक, यदि अपने पूर्व वासना के अनुसार विषय भोग करना चाहता है तो तारकोपदेश से ब्रह्मज्ञान होने पर भी जीवन्मुक्त के तुल्य उसका मन इन्द्रिय नष्ट नहीं होता इसी से वह कैलासवास आदि गतियों को प्राप्त होता है और यदि पूर्व वासना के न होने से वह प्राणी विषय का भोग नहीं चाहता तो उसका मन इन्द्रिय नष्ट हो जाता है इसी से मरते ही विदेह मोक्ष पाता है और उक्त सूत्र के अक्षरों का भी प्रकृत विषय में यह अर्थ है कि "छन्द" (काशी में मृतधर्मात्मा पुरुष की इच्छा) से "उभय" (कैलास वासादि और विदेह मोक्ष दोनों) के 'अविरोध (संभव) होने से प्रकृत में भोग और विदेहमोक्ष की व्यवस्था समझनी चाहिए, इति ।

"*काश्यां शरीरं*" काशी में शरीर छोड़ते प्राणियों का पुनः शरीर नहीं होता यह अवश्य है और यदि शरीर होता है तो कण्ठ में विष की कालिमा ललाट में नेत्र और उस नेत्र से ऊपर चन्द्रकला भी रहती है ।

'कपालमिन्दुः करिचर्मनागाः' इत्युक्तशैवागमवाक्यमपि सवासनपुण्यात्ममुमूर्षुविषय
एवं च पूर्वोदाहृतवाक्येभ्यः ।

तथा—कृत्वापि काश्यां पापानि काश्यामेव म्रियेत चेत् ।
भूत्वा रुद्रपिशाचोऽपि पुनर्मुक्तिमवाप्स्यति ॥
काश्यां मृतानां जन्तूनां दैवात्पापकृतामपि ।
न पातो नरके तेषां तेषां शास्ताऽहमेव यत् ॥
अयं हि स कुलस्तम्भो यत्र श्रीकालभैरवः ।
क्षेत्रपापकृतः शास्ति दर्शयँस्तीव्रयातनाम् ॥
अन्यत्र यत्कृतं पापं तत्काश्यां परिणश्यति ।
काश्यां तु यत्कृतं पापं पञ्चक्रोशे विनश्यति ॥
पञ्चक्रोशे कृतं पापमन्तर्गेहे प्रणश्यति ।
अन्तर्गेहे कृतं पापं पैशाचनरकावहम् ॥
पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि ।
न कल्पकोटिभिः काश्यां कृतं कर्म प्रभुज्यते ॥
किन्तु रुद्रपिशाचत्वं जायतेऽत्रायुतत्रयम् ।
अहो रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥
कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम् ।
न तु शक्रसहस्रत्वं स्वर्गे काशीं पुरीं विना ॥

इत्यादि स्कान्दलैङ्गादिवाक्येभ्यश्चोक्तव्यवस्थया व्यवधानाव्यवधानकल्पनमेव समञ्ज

भाषा

"*कपालमिन्दुः*" यह 'पूर्वोक्त' वाक्य भी भोगेच्छायुक्त पुण्यवान् जो काशी में मरता है उसी विषय में है न कि काशी मृत सब मनुष्यों के विषय में, क्योंकि यदि ऐसा स्वीकार किया जाय यातना भोग के कहने वाले पूर्वोक्त अनेक प्रमाणों का विरोध पड़ जायगा तथा "*कृत्वापि*" काशी पाप करके भी यदि काशी में मरे तो रुद्रपिशाच होने के अनन्तर वह भी मुक्ति पावेगा। काशी में पापी से पापी प्राणियों को भी नरक नहीं जाना पड़ता क्योंकि उनका शासन मैं ही करता हूँ क्योंकि यह वही कुलस्तम्भ ( लाठभैरव ) हैं जहाँ कि श्री कालभैरव तीक्ष्ण यातना दिखलाते काशी में पापियों का शासन करते हैं। अन्य देश में किया हुआ पाप काशी में और काशी किया हुआ पाप पंचक्रोश में तथा पंचक्रोश में किया हुआ पाप अन्तर्गृह में नष्ट हो जाता है किन्तु अन्तर्गृह में किया हुआ पाप रुद्रपिशाच रूपी नरक का देने वाला है। उस पाप का यदि अन्य देश में जाकर किया चाहे तो कोटि कल्पों में भी नहीं हो सकता किन्तु और काशी अधिक से अधिक तीस सहस्र वर्षों तक रुद्रपिशाच रहता है। ओहो ! रुद्रपिशाच होना नरकों भी अधिक दुःख है। तथा काशी में सहस्रों पाप करते हुए भी मर कर रुद्रपिशाच होना है परन्तु काशीपुरी के बिना स्वर्ग में सहस्र बार इन्द्र होना नहीं अच्छा है। इत्यादि स्कन्दपुराण

सम्। 'उत्क्रममाणेष्विति' श्रौतोवर्तमानार्थकशानच्प्रत्ययस्तु 'द्वित्राणां हि पवित्राणामि'त्युक्त-वाक्यविषये चरितार्थ इति न यातनान्तिकस्तारकोपदेशस्तेन विरुध्यते। एतेन यातनाश्रवणं विभीषिकामात्रम्। श्रुतिवाक्ये उत्क्रममाणेष्विति वर्तमानार्थकप्रत्ययस्यानुरोधेन स्मृतिवाक्यानां स्वार्थपरत्वाभावादिति निरस्तम्। नह्यभ्यासादितात्पर्यग्राहकलिङ्गानुगृहीतानां सिद्धवदेव भैरवीं यातनां निर्दिशतामेषां स्मृतिवचसां सहसैव निर्मूलता कल्पयितुं शक्यते किंत्वेतादृक्किंचिच्छ्रुति-वाक्यमस्त्येवेत्येवैभिरवगन्तुम् शक्यते। न चौदुम्बरी सर्वा वेष्टयितव्येति स्मृतेः 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति श्रुत्या लोभमूलत्वादिकल्पनपर्यवसन्नस्वार्थच्युतिरूपो बाधश्शावरे मते यथा भवति तथाऽऽत्रापि वर्तमानार्थशानच्छ्रुत्या पूर्वोदाहृतस्मृतीनां बाधोऽस्त्विति वाच्यम्। वैषम्यात् नहि तत्र स्मृतेः किंचित्तात्पर्यग्राहकमस्ति। निश्चिते च तात्पर्ये नान्यपरत्वं कल्पयितुं शक्यते। किं च 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति न्यायेन प्रबलस्यापि श्रुत्यादेः प्रमाणस्य दुर्बलैरप्यनन्यगतिकैर्लिङ्गादिभिर्यथा बाधोऽभ्युपगम्यते तथैव प्रकृतेऽप्यस्तु। किंच यातना-प्रदर्शनं विभीषिकामात्रमिति ब्रुवता श्रोतॄणां पापानिर्भयतां सम्पादयता काश्यां पापाचारस्य विवृत्तद्वारतैव विहिता स्यात्। यत्तु केचित् मरणक्षण एव स्वप्रतीत्याऽयुतत्रयवत्सरावच्छिन्न-कालं रुद्रपिशाचयातनामनुभवन्तीति वर्तमानार्थशानच्प्रत्ययोषरत्वव्यपदेशयोर्यातनाश्रवणस्य च गतिं कल्पयित्वा व्यवधानकल्पनस्याप्रामाणिकतामातिष्ठन्ते—तत्रेदमुच्यते, सर्वस्यापि प्रपञ्चस्य प्रातीतिकत्वेनात्र म्रियमाणपुरुषस्य प्रातीतिकतादृशकालावच्छिन्नभोगाभ्युपगमे फलतो न कश्चिद्विशेषः यतः स्वदृश्यप्रपञ्चस्य स्वदृष्ट्यैव सत्वमिति न तत्रानुभवितॄणां

भाषा

और लिङ्गपुराण आदि के वाक्यों के अनुसार भी अनन्तरोक्त व्यवस्था ही ठीक है और पूर्वोक्त जावालि उपनिषद् के वाक्य का विरोध भी इस अवस्था में इस कारण नहीं है कि उसमें जो यह कहा है कि "मरते समय तारक का उपदेश होता है" वह कथन पवित्र मनुष्यों के ही विषय में है। इन पूर्वोक्त युक्तियों से यह कथन भी परास्त हो गया कि "यातना भोग का सुनाना केवल डर दिखाना है। क्योंकि जावालि उपनिषद् में मरने ही के समय तारक का उपदेश कहा है" और इस मत में यह एक और भी दोष है कि यह मत क्या है ? मानो काशी में पाप करने के लिए सबको आज्ञा देना है और यह भी जो किसी ने कहा है कि "काशी में मरने के समय एक ही क्षण में परमेश्वर की माया से तीस सहस्र वर्षों का पाप भोग हो जाता है। यही रुद्रपिशाच की यातना है क्योंकि काशी पुण्य पाप का ऊसर है और जावालि उपनिषद् में मरते समय तारक का उपदेश होना कहा है। इस कारण काशी के पापियों को भी मरने ही के समय तारक का उपदेश होता है।" इस मत पर यह विचार है कि जब सब जगत् ही वेदान्त दर्शन के अनुसार माया मात्र है और यातना भोग भी यदि माया मात्र ही हुआ तो एक क्षण और तीस सहस्र वर्ष के भोग में क्या विशेष हुआ ? इसलिए यह मत ठीक नहीं है; किन्तु अनन्तरोक्त व्यवस्था ही ठीक है।

प्र०—यदि रुद्रपिशाच होकर काशी में भी यातना हीं भोगना पड़ता है तो काशीपुरी पुण्य और पाप का ऊसर कैसे है ?

पुरुषाणां दृष्टिः प्रमाणयितुं शक्यते। योगवासिष्ठे च सर्वत्र दृष्टिरेव प्रपञ्चस्य सत्वे प्रमाणमुत्पत्तौ च हेतुरिति घण्टाघोषः। कल्पना चैतादृशी तदीयनानोपाख्यानप्रसिद्धिमादायैव क्रियते। वस्तुतस्तु सर्वस्यैव प्रपञ्चस्य दृष्टिमात्रविलसितत्वात्तदृष्ट्याऽयुतत्रयवर्षावच्छिन्ने भोगे सुस्थिते क्षणमात्रमचणमात्रमिति विशेषपरीक्षया। अतो यथोक्तमेव साधु। अथ "ऊषरः पुण्यपापानां धन्या वाराणसी पुरी" इत्यादिवाक्यानां का गतिरिति चेत्—काशीसंस्थस्य मोक्षावश्यंभाव एवेति गृह्यताम्। अत एव काशीखण्डे "नाङ्कुरयन्ति हरदृग्ज्वलितानि तेषामि"त्यादिवाक्यं पुनर्जन्मसम्बन्धाभावमात्रं बोधयति, नतु यातनाद्यभावमपि। विरोधात् यथा च ब्रह्म, स्वतो निर्गुणं मायासम्बन्धात् स प्रपञ्चमिव वस्तुतो निष्प्रपञ्चमेव तथा ब्रह्मस्वरूपमिदं क्षेत्रमूषरमपि मायया पुण्यपापवृद्धिकरमिवाभाति यद्वा काशीतो बहिराचरितानां पापानां 'काशीप्रवेशादनघः' इत्यादिवाक्यानुरोधात्प्रवेशमात्रेण पुण्यानां च काशीप्रापकतामात्रेण क्षीणत्वात्तदृष्ट्यैवोषरत्वव्यपदेशः। यत्तु काशीमध्यवर्तितीर्थायतनस्नानदर्शनादिभिरेकद्व्यादिजन्मकृतपापनिवृत्तेः श्रवणम्। तत् येऽन्यत्र मृताः सुकृतवशात्काश्यां लब्धजन्मानस्तद्विषयम् 'निर्गते गृह्यते पुनरि'ति वाक्यं तु 'अविमुक्तं न विमुञ्चेदि'ति विधेरर्थवाद एव। ननु चण्डेश्वरादिलिङ्गपूजनतत्तत्तीर्थस्नानादीनां

भाषा

उ० १—ऊसर कहने का इतना ही अभिप्राय है कि काशीपुरी में मरण होने से मोक्ष अवश्य होता है और यह अभिप्राय नहीं है कि तीस सहस्र वर्षों तक यातना नहीं भोगनी पड़ती। इसी से काशीखण्ड में "*नाङ्कूरयन्ति*" इस वाक्य में यातना न भोगना नहीं कहा है किन्तु यही कहा है कि काशीपुरी के मरे हुए प्राणियों के पाप रूपी बीज अंकुरित नहीं होते अर्थात् पुनर्जन्म नहीं होता क्योंकि जैसे चना आदि बीज अग्नि में जब भूने जाते हैं तब वे भोजन के काम में तो आ सकते हैं परन्तु अंकुरित होने की शक्ति उनमें नहीं रहती वैसे उक्त कर्म शिव जी की दृष्टि से भुंज जाते हैं इससे यातना भोग वह दे सकते हैं परन्तु पुनर्जन्म की शक्ति उनकी मारी जाती है।

उ० २—अथवा ऊसर कहने का यह अभिप्राय है कि जैसे वास्तविक में परब्रह्म यद्यपि निर्गुण और निराकार हैं तथापि केवल माया के बल से परब्रह्म में यह जगत् सत्य सा भाषित होता है वैसे यह काशीक्षेत्र भी परब्रह्म रूपी होने से यद्यपि ऊसर है तथापि माया ही से इसमें किये हुए पाप पुण्य अक्षय से ज्ञात होते हैं।

उ० ३—अथवा ऊसर कहने का यह तात्पर्य है कि काशी के बाहर का पाप काशी में प्रवेश करने मात्र से नष्ट हो जाता है जैसा कि "*काशीप्रवेशादनघः*" ( काशी में प्रवेशमात्र से पापियों के पाप नष्ट हो जाते हैं ) इत्यादि कहा है और बाहर किए हुए पुण्य भी काशी में प्रवेश कराकर नष्ट हो जाते हैं क्योंकि उनका फल यही है कि काशी में प्रवेश हो गया। इस रीति से बाहर के पुण्य और पापों के लिए काशी ऊसर है।

तथा काशी के मध्यवर्ती अनेक तीर्थों में स्नान और दर्शन आदि से जो अनेक जन्मों के पापों का नाश होना लिखा है वह उन्हीं पुरुषों के विषय में है जो पुरुष कि अन्यत्र मृत होकर अपने पुण्य के प्रभाव से काशी में उत्पन्न होते हैं।

तत्तल्लोकगतिरूपफलस्मरणसद्भावेऽपि किमिति मोक्षमात्रैकफलत्वमुच्यते इति चेत्—उच्यते नहि तत्तद्वाक्येषु प्राणोत्क्रमणवाचकं पदं प्रयुज्यते येन विरोधः स्यादिति काशीकृततत्तत्पूजनादिमन्तो येऽन्यत्र मृतास्तेषां तल्लोकगतिरिति। वस्तुतस्तु परमानन्दस्वरूपमोक्षस्यैव तत्पदानन्दानामेकदेशत्वं यथा तथा समुदितरूपेण मोक्षप्रदस्य काशीक्षेत्रस्य तत्तदवान्तरप्रदेशानां तत्तद्गतिप्रदत्वम्। अत एव सर्वेषामेव तल्लोकाधिष्ठातॄणां काश्यां कृतेन तपश्चर्यालिङ्गस्थापनादिना तत्तदधिकारप्राप्तिः स्मर्यते किं च यथा संयोगपृथक्त्वन्यायेन प्रातिस्विकविधिवाक्यैर्यज्ञादीनां तत्तत्फलप्राप्तौ विनियोगसत्त्वेऽपि विविदिषावाक्येन सामस्त्येन यज्ञादीनामेकत्रार्थे विनियोगः सम्पाद्यते तथा तत्तत्सेवनादेः सत्यपि तथात्वे सम्पूर्णक्षेत्रस्य मुक्तिप्रदत्वे न विवादः। यद्वा अङ्गवाक्येषु श्रूयमाणानामपि फलानामङ्गिवाक्यश्रूयमाणफलान्नातिरेकः कल्प्यते तेषां तत्रैवोपकारजननेन चारितार्थ्यात् तेनैव प्रकारेण तत्र तत्तत्फलानां मोक्षानन्द एवान्तर्भावस्तदर्थं च न पृथग्यतितव्यमित्येव शास्त्रतात्पर्यं नन्वेवं काशीमृतानां मोक्षसद्भावे निश्चिते तदुद्देशेन यदौर्ध्वदैहिकं कर्म बान्धवैः क्रियते तत् किं तदर्थं स्वार्थं वा नाद्यस्तेषां मुक्तत्वात् न द्वितीयः स्वोद्देशेनाविहितत्वात् अतो न तत् कार्यमिति चेन्न। शिष्टाचारात् निषेधश्रवणाच्च 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" इति भगवदुक्तेर्यत्कार्यत्वेन

भाषा

"*निर्गते गृह्यते पुनः*" ( काशी में प्रवेश करने से जो पाप छूटे रहते हैं काशी से निकलने पर वे पाप पुनः पकड़ लेते हैं )। यह वाक्य तो जावालि के पूर्वोक्त वाक्य में जो अविमुक्त (काशी) छोड़ने का निषेध किया गया है। उसी का अर्थवाद है अर्थात् इससे काशी के त्याग करने में पाप आने का भय दिखलाया गया है।

प्र०—चडेण्श्वर आदि लिंगों का पूजन तथा काशी के मध्यवर्ती तीर्थों में स्नानादि का स्वर्ग आदि फल भी जब पुराणों में कहा हुआ है तब क्यों काशी का मोक्ष ही एक फल कहा जाता है।

उ० १—जहाँ उक्त पूजन आदि का स्वर्ग आदि फल कहा है वहाँ कहीं काशी में मरण की चर्चा नहीं है। इसलिए उस पूजन आदि का स्वर्ग लोक आदि फल उसी के लिए है कि जो उक्त पूजन आदि कर देशान्तर में जा मरा।

उ० २—काशी में जो मनुष्य उक्त पूजन आदि कर काशी ही में मरा उसको जब परमानन्दरूपी मोक्ष मिल गया तब उक्त पूजन आदि का फल भी मिल ही जाता है। क्योंकि उन लोकों का आनन्द मोक्षरूपी आनन्द में अन्तर्गत हो जाता है। इसी से उन लोकों के स्वामी देवताओं का काशी में लिङ्गस्थापन आदि के द्वारा उन लोकों का अधिकार पाना काशीखण्ड आदि में कहा हुआ है।

प्र०—जब की काशी में मृत मनुष्यों का मोक्ष ही हो जाता है तब उनका श्राद्ध कर्म क्यों किया जाता है ?

उ० १—जैसे चन्द्रग्रहण और सूर्यग्रहण में जब चन्द्रमा और सूर्य, ग्रहण लगेही अस्त हो जाते हैं और ज्योतिषशास्त्र से निश्चय भी रहता है कि 'अब मोक्ष हो गया होगा' तब भी भोजन के निषेध

श्रुतं तत्कार्यमेव यथा च ग्रस्तास्तचन्द्रासूर्योपरागादौ ज्योतिःशास्त्ररीत्या विज्ञाततत्तन्मोक्षकालैरपि भोजननिषेधवाक्यभिया न भुज्यते तथा प्रकृते काशीसंस्थानां मोक्षे शास्त्ररीत्या निश्चितेऽपि नौर्ध्वदैहिकं निवर्तते, निवर्तते चालब्धतत्वशाक्षात्काराणां परिव्राजकानां निश्चितेऽपि मोक्षसद्भावे। अतश्च कार्यत्वेनाकार्यत्वेन वा यच्छ्रुतं तत्तथैवाचरणीयमनाचरणीयं चेत् सिद्धान्तः। किं च यथा चन्द्रेस्वरादिनामपुरस्कारेणापि कृतं पूजनं परमेश्वर एव सर्वाधिष्ठातरि पर्यवस्यति, तथेदं शास्त्रविहितमौर्ध्वदैहिकं कर्मापि तत्तन्नामपुरस्कारेण कृतं तत्रैव पर्यवसास्यति फलिष्यति च। तस्यैव सर्वमुक्तपुरुषस्वरूपत्वात् अपि च विरक्तानामेव मरणाव्यवहितोत्तरकाले मोक्षो भवतीति प्राग्व्यवस्थापितम् रुद्रपिशाचयातनायाश्च वर्षायुतत्रयं परमोऽवधिः न तु सर्वेषामेव पापिनां काशीसंस्थितानां तावत्पर्यन्ता यातनेति नियमः किन्तु काशीकृतपापलाघवगौरवानुसारेणैकं क्षणमारभ्य घटीयामदिनपक्षमासर्त्वयनवत्सरादितत्तत्कालावच्छिन्ना यातना भवन्ति अन्यथाऽविवेकोऽच्छेदप्रसंगात् तदनुरोधादेव च तत्तद्यातनापर्यवसाने तारकोपदेशस्तत्वसाक्षात्कारो मोक्षश्च भवन्ति एवं च तत्तन्मोक्षकालानां मनुष्यैर्विशिष्य निर्णेतुं अशक्यतया रुद्रपिशाचयातनाशङ्कया कृतस्य शिष्टपरिगृहीतस्यौर्ध्वदैहिकस्य कर्मणः तत्तद्यातनादेहेषु क्षुत्पिपासादिदुःखनिवृतावुपयोगो भवत्येवेति नौर्ध्वदैहिककर्मनिवृत्तिरेष्टव्या न च पापिनामपि काशीवासिनामन्तर्गृहपंचक्रोशीप्रदक्षिणीकरणादिना प्रायश्चिते सम्भवति कुतस्त्योऽसौ यातनासंभव इति वाच्यम्। अज्ञातानामेव पापानां, तथाऽवश्यकर्तव्यतया विहितानां तत्तत्तीर्थनित्यवार्षिकादियात्राणाम् प्रमा-

भाषा

वाक्य के भय से दिन वा रात्रि में भोजन नहीं किया जाता वैसे ही काशी में मृत मनुष्यों का शास्त्र से मोक्ष निश्चय होने पर भी श्राद्धविधान के वाक्यों के भय से श्राद्ध किया जाता है क्योंकि काशी में मरे हुये प्राणी के श्राद्ध का निषेध नहीं किया है तथा संन्यासी होकर जो ब्रह्मज्ञानी नहीं है उसके मरने पर यद्यपि यह निश्चय है कि उसको मोक्ष नहीं हुआ तब भी उसका श्राद्ध नहीं किया जाता क्योंकि संन्यासी के श्राद्ध का निषेध है वैसे ही प्रकृत में मोक्ष निश्चय होने पर भी श्राद्ध किया जाता है।

उ० २—काशी में मरे हुये मनुष्यों में भी पवित्रों ही को मरते ही हुये मोक्ष का होना पूर्व ही सिद्ध हो चुका है और काशी के पापियों के विषय में भी यह नियम नहीं है कि सब को तीस सहस्र वर्ष की यातना हो क्योंकि ऐसा अन्धेर नहीं हो सकता कि सब धान बाईस पसेरी हो जाय किन्तु पाप की न्यूनता और अधिकता के अनुसार एक क्षण से लेकर तीस सहस्र वर्ष पर्यन्त जो जैसा पापी रहता है उसको उतने समय तक यातना भोगनी पड़ती है और तदनन्तर तारकोपदेश और मोक्ष होता है। ऐसी दशा में जब यह निश्चय मनुष्य को नहीं हो सकता कि काशी में मरे हुए अपने संबन्धी को कब मोक्ष हुआ ! तब उसको अवश्य श्राद्ध करना चाहिये जिससे वह मृत जीव यदि यातना में भी हो तो उसकी भूख प्यास की निवृत्ति हो।

प्र०—अन्तर्गृह और पञ्चक्रोशी की यात्रा आदि अनेक प्रायश्चित्तों से काशीवासियों के जब सब पाप नष्ट हो जाते हैं तब उनको यातना भोग कैसे हो सकता है ?

द्वालस्यादितः परित्यागेन जनितानामेव च पापानां निवृत्तिमुद्दिश्य प्रतिमासमन्तर्गृहयात्रायाः प्रत्ययनं वाराणस्याः प्रति संवत्सरं च पञ्चक्रोश्याः प्रदक्षिणीक्रियाविधानात् अन्येषां काश्यां कामकृतानां ब्रह्महत्यादीनां पापिनां मुक्तयातनोपाधायकत्वे बाधकाभावात्—

तथा च पाद्मे—प्रमादिकस्य लोपाय प्रतिभूतं विभोर्गृहम् ।
कुर्यात्प्रदक्षिणं नित्यं तत्कल्मषजिहीर्षया ॥
अयनद्वितये कुर्यात् वाराणस्याः प्रदक्षिणम् ।
प्रतिसंवत्सरं चापि काशीमप्यभितश्चरेत् ॥

एवं शिवरहस्येऽपि महता प्रबन्धेन वीरेश्वरकेदारेश्वरादीनां कियतामपि लिङ्गानां तीर्थानां च पूजनस्नानादेः परित्यागेन प्रत्युक्तस्यैव दुरितजातस्य निवृत्तिमुद्दिश्य पञ्चक्रोशी प्रदक्षिणीक्रिया विहिता। अतस्ततोऽधिकानां पापानां निविवर्तयिषया तत्तारतम्यानुसारात्पृथक् प्रदक्षिणावृत्यनावृत्ती यथोचितं कल्पनीये "उपपातकमभ्यस्तं महापातकतां व्रजेत्" इति स्मार्तन्यायेन प्रायश्चित्तेष्वप्यावृत्यनावृत्तिकल्पनात् प्रायश्चितार्थं च तत्तदनुष्ठाने प्रायश्चित्तशास्त्रोपदिष्टविधिना मुण्डनोपवासादिकमपि विधेयम् तदशक्तौ च तदनुकल्पः । अतोऽप्युर्वरितानां येषां च धर्मशास्त्रेषु प्रायश्चित्तानयनोद्यत्वमुक्तं यथा "कृतघ्ने नास्ति निष्कृति" रित्यादि तेषां च पापानामवधितत्वात्तैरेव रुद्रपिशाचादियातना भवतीति व्यवस्थापयामासुः। अद्य यादपि रुद्रपिशाचानां गयाश्राद्धयाचनादिकमैतिह्यारूढमेतद् व्यवस्था संवावदूकमिति तु ध्येयम् ।

भाषा

उ०—उन यात्रा आदि कर्मों से उन्हीं पापों का नाश होता है जो कि अज्ञान से हो जाते हैं अथवा जो आलस्य से होते हैं जैसे तीर्थयात्रा, देवदर्शन न करना आदि, जैसा कि पद्मपुराण में कहा है कि—

"*प्रामादिकस्य०*" प्रमादकृत पाप के नाशार्थ प्रत्येक चतुर्दशी तिथि में अन्तर्गृह की और प्रत्येक अयन ( उत्तरायण और दक्षिणायन छः २ मास ) में वाराणसी की तथा प्रतिवर्ष पूर्ण काशी की प्रदक्षिण यात्रा करे । और शिवरहस्य में भी विश्वेश्वर आदि कतिपय लिङ्ग का दर्शन और कतिपय तीर्थ का स्नान त्यागने के अपराध की निवृत्ति के लिये पञ्चक्रोशी यात्रा कही है । इससे यह स्पष्ट है कि काशी में जान बूझ कर किये हुए ब्रह्महत्या आदि पापों का यदि शास्त्रोक्त प्रायश्चित्त नहीं किया गया तो उनके कारण अवश्य ही रुद्रपिशाच यातना भोगनी पड़ती है । इति ।

इस व्याख्यान में, काशीवासी पापियों के विषय में श्री सुरेश्वराचार्य जी के व्याख्यान से विरोध किया गया अर्थात् यह सिद्धान्त किया गया है कि काशीवासी पापियों को काशी में मरते ही तारक का उपदेश नहीं होता किन्तु रुद्रपिशाच यातना के अनन्तर होता है और यह सिद्धान्त ठीक ज्ञात होता है क्योंकि 'काशी मृतपापी रुद्रपिशाच होकर गया श्राद्ध मांगते हैं' ऐसा सुननें में आता है।

मुझे तो यहाँ यही तीन बातें वास्तविक समझ पड़ती हैं एक यह काशी के पापी भी जो काशी केदारेश्वर के अन्तर्गृह में मृत्यु पाते हैं उनको कदापि भैरवयातना नहीं होती जैसा कि ब्रह्मवैवर्तखिल काशी मूल रहस्य, काशीकेदारमाहात्म्य के अध्याय १३ में कहा है कि—"पुरा केदार०"

मम तु प्रतिभाति काश्यां कृतपापानामकृततत्प्रायश्चितानामपि काशीकेदारेश्वरान्त निधनमुपेयुषां भैरवयातना नैव भवति तथा च ब्रह्मवैवर्तेखिले काशीमूलरहस्ये काशीकेदार माहात्म्ये १३ अध्याये वामदेवमृषिं प्रति भगवान् सनत्कुमारः—

पुरा केदारनाथस्य चेत्रमन्तर्गृहे स्थितम् ।
पूर्वस्यां दिशि गङ्गार्द्ध-भागं तीर्थसमन्वितम् ॥
अर्धक्रोशं चाग्निदिशि लोलार्केशान्तदक्षिणम् ।
सर्वपापप्रशमनं शङ्खोद्धारान्तनैर्ऋतम् ॥
पश्चिमे वैद्यनाथान्तं रमातीर्थान्तवायुदिक् ।
उत्तरे शूलटङ्कान्तमैशान्यां क्रोशमर्धकम् ॥
एतन्मध्ये तिलाभाण्डलिंगादीनि बहूनि च ।
दुर्गाविष्णुगणेशानां मूर्त्तयोऽप्यमिताः स्थिताः ॥

तत्राप्युत्तमपुण्यदाऽखिलशिवाऽऽघानां निहन्त्री नृणां
प्राचीना मणिकर्णिका शुभकरी केदारनाथस्तथा ।
काश्यां भैरवयातनाऽस्त्यघकृतां सर्वत्र नास्त्यन्यथा
तत्रापीशदयावशात्परिहृता केदारसद्माभितः ॥१०५॥
पश्यध्वं मणिकर्णिकां चिरतरां केदारलिङ्गं जना-
गाहध्वं मणिकर्णिका शुभजलेऽप्यचर्ध्वमीशं सदा ।
प्रापध्वं भुवि भुक्तिमन्तसमये मुक्तिं सुरैर्दुर्लभा-
मित्युद्दामसुवाक्यभैरवविभो केदार एवास्त्यहो ॥१०६॥ इति

भाषा

केदारनाथ का अन्तर्गृह प्राचीन चेत्र है जिसकी ८ सीमाएँ हैं कि—पूरब आधी गङ्गा के नीचे पड़े तीर्थ पर्यन्त, अग्निकोण आधा कोश तक, दक्षिण लोलार्केश्वर पर्यन्त, लङ्काकोण शङ्खोद्धार (साखू धारा) पर्यन्त, पश्चिम वैद्यनाथ पर्यन्त, वायुकोण लक्ष्मीकुण्ड पर्यन्त, उत्तर शूलटंकेश्वर पर्यन्त और ईशान कोण आधे कोश तक इसके मध्य में तिलाभंडेश्वर आदि अनेक शिवलिङ्ग और दुर्गा आदि देवताओं की अनेक मूर्तियाँ भी स्थित हैं। तथा इस अन्तर्गृह में भी पापों के नाश करने वाली पुरानी मणिकर्णिका और केदारनाथ लिङ्ग भी हैं। उस पर भी यह आश्चर्य है कि इस केदार ही के विषय में विभु (रुद्रपिशाच यातना के स्वामी) कालभैरव का उद्दाम (अमूल्य) अर्थात् निर्व्याज दया से पूर्ण यह सु (परमसत्य) वाक्य है कि यद्यपि काशी के अन्य प्रदेशों में मृतकाशी के पापियों को भैरवी यातना अवश्य होती है, तथापि ईश (श्री शङ्कर) की दया से केदारेश्वर के अन्तर्गृह के (चाहे किसी प्रदेश में मरे) मृतपापियों को भैरवी यातना नहीं होती। हे मनुष्यों! पुरानी मणिकर्णिका और केदारनाथ लिङ्ग का दर्शन स्नान पूजा आदि प्रति दिन किया करो जिससे कि इस लोक में भुक्ति (सुख) और अन्त समय में देवताओं की भी दुर्लभ मुक्ति पाओ।

अत्र हि काश्यां विश्वनाथस्यान्तर्गृहादन्यत् प्राचीनं केदारनाथस्यान्तर्गृहं साष्टसीम प्रतिपदोक्तमेवोक्त्वा तत्र तिलाभाण्डादिलिङ्गानां दुर्गाविष्णुप्रभृतीनां देवतानां चामितानां स्थितिं वर्णयित्वा 'तत्रापी'त्यपिना विश्वेश्वरान्तर्गृहं समुच्चित्य 'प्राचीना मणिकर्णिके'ति विश्वेश्वरान्तर्गृहवत् केदारेश्वरान्तर्गृहेऽपि मणिकर्णिकान्तराभिधानेनान्तर्गृहयोः साम्यं बोधयित्वा विश्वेश्वरान्तर्गृहापेक्षया काशीकेदारान्तर्गृहे विशेषाभिधित्सया 'तत्रापीशदयेत्यादिक' मिति शब्दान्तं कालभैरववाक्यं यथाश्रुतमनूद्य वाक्यस्यास्य यातनाधिपत्यरूपविभुत्वविशेषितकालभैरवोक्तत्वं निर्व्याजकरुणापूर्णत्वरूपमुद्दामत्वं सहजभूतोक्तित्वरूपं शोभनत्वं चेति विशेषेण त्रयमार्षत्वाल्लुप्तसुना वाक्येतिशब्देन विशेष्यं चाभिधाय 'केदार एवे' त्येवकारेणास्य वाक्यस्य काश्यपरिच्छेदपरिच्छेदकतां व्यवच्छिद्य प्रकरणमिदम् 'अहो' इति साश्चर्यमुपसंहृतम् । अत्र 'काश्यां भैरवे' त्यादिश्लोकार्द्धे मदुक्तोऽर्थः स्पष्ट एव । अथ 'केदारसद्माभित' इत्यत्र केदारसद्मशब्दस्य पूर्णं केदारेश्वरान्तर्गृहं नार्थः, तथा सति वाक्यस्यास्य तद्बहिर्भूतकाशीभागविषयकतापत्त्या केदार एवेत्यवधारणविरोधप्रसंगात् । नापि केदारेश्वरलिङ्गस्य मन्दिरमेव तदर्थः । एवं सति कियद्दूरपर्यन्तमिति विशेषानभिधानेन न्यूनताऽऽपत्तेरिति चेन्न; केदारसद्मशब्दस्योक्तसीमाष्टकविभक्तकेदारनाथान्तर्गृहपरत्वात् न चोक्त दोषः । नह्यसावभितः शब्दयोगाद्द्वितीयान्तो येनोक्तदोषः स्यात्, अपि तु केदारसद्मन्यभित इत्यार्षत्वाल्लुप्तसप्तमीकः समस्तो वा, अग्रे काशीकेदारान्तर्गृहे सर्वत्रैव मृतानां भैरवयातनाविरहरूपवरप्रदानस्य तत्रैव वक्ष्यमाणत्वात् । तथा च विंशेऽध्याये तत्रैव—

इत्थं वैमानिकास्ते परमशिवमहातारकेणोपदिष्टा
भोगं मोक्षं च युग्मं युगपदभिलभन्भक्तवश्यप्रसादात् ।

भाषा

अब यहाँ यह ध्यान करना चाहिए कि इस प्रकरण से काशी में विश्वनाथ के अन्तर्गृह से अन्य केदारनाथ का प्राचीन अन्तर्गृह आठ सीमाओं से विभक्त स्पष्ट ही कह उसमें विश्वनाथ के अन्तर्गृह के तुल्य तिलाभाण्डेश्वर आदि शिवलिङ्गों और दुर्गा आदि देवता की मूर्तियों तथा पुरानी मणिकर्णिका की स्थिति के कथन से उक्त दो अन्तर्गृहों की अन्योन्य में समता दिखलाकर विश्वनाथ के अन्तर्गृह और काशी क्षेत्र के अन्यान्य विभागों की अपेक्षा केदारनाथ के अन्तर्गृह में विशेष दिखलाने के तात्पर्य से 'यद्यपि से मुक्ति पाओ' तक कालभैरव का वाक्य ज्यों का त्यों उद्धृत किया हुआ है और यह भी कहा हुआ है कि 'यह वाक्य, यातना के स्वामी कालभैरव का है तथा निर्व्याज दया से पूर्ण और परम सत्य है' और इस वाक्य में अति स्पष्ट रूप से यह कहा है कि ईश (श्रीशिव) की दया से केदारेश्वर के अन्तर्गृह में सब ही प्रदेश ऐसे हैं कि उनमें मृत पापियों को भैरवी यातना नहीं होती इससे पूर्वोक्त विषय स्पष्ट ही सिद्ध होता है। तथा काशी केदारमाहात्म्य के २० अध्याय में भी कहा है कि 'इत्थं' अर्थात् पूर्वोक्त प्रकार से भक्तवश्य परम शिव के किये हुए महातारक के उपदेशरूपी प्रसाद से विमान पर आरूढ़ महर्षियों की स्वर्गादि लोक की प्राप्ति के सहित जीवन्मुक्ति हो चुकी। तदनन्तर अद्वितीय दयालु श्री पार्वती के सहित परमेश्वर ने हाथों से अपने भक्त (मांधाता) को स्पर्श करते हुए

पश्चादाहात्मभक्तं त्वतुलितदयया ऽपर्णयेशः कराभ्या–
मामृश्यन्वत्स मान्धातरिति मम परा त्वं तनुर्यां हि धाम ॥ ६५ ॥
किंतेऽन्यत्प्रार्थ्यमस्ति प्रवद शुभमते नास्त्यदेयं हि तेस्ती–
त्याकर्ण्येशस्य वाचं पुनरपि विनमन् प्रार्थयामास शम्भुम् ।
काश्यां शम्भो प्रजानां सकलुषमनसां भैरवाज्ञाऽऽवलीया
सा माभूदत्र तेऽन्तर्गृहमृतजनतायाः प्रसादं कुरुष्व ॥ ६६ ॥
इत्थं तं याचमानं पशुपतिरवदत्प्रार्थना दुर्लभा ते
भक्तस्त्वं मे तथापि प्रियतम तव या प्रार्थना सा तथास्तु
इत्युक्त्वा भैरवं माधवमपि भगवान् दण्डपाणिं च ढुण्ढि–
माहूयान्याँश्च देवानदिशदथ वरं काशिकेदारभूमेः ॥ ६७ ॥
माभूदत्र प्रजानामतितरमसहा भैरवी यातना मे
गेहेऽन्तर्भूप्रदेशे विघटितवपुषां तारकस्योपदेशात् ।
पापिष्ठा अप्यवश्यं मम वरकृपया तत्क्षणं यान्तु धाम
दिव्यं मे सत्यमेतच्छृणुत दिविषदो भैरवाद्या वचो मे ॥६८॥ इ

एवं चोक्ता यातना केदारेश्वरान्तर्गृहस्थकेवलपृथिवीभागातिरिक्तकाशीभागमृतानामेव काशी पापिनाम् उपसंहारन्यायात् । नहि भैरवीयाया यातनायाः प्रतिपादकं वेदवाक्यं प्रत्यक्षमु लभ्यते । पौराणिकन्तु यातनावाक्यं काशीसामान्यविषयमेवेति सुशकमेव तदेतद्वाक्यबलादु विशेषविषयतयोपसंहर्तुम् ।

भाषा

कहा कि मान्धातः! तू मेरा दूसरा शरीर है। अब तू मेरे धाम को प्राप्त हो ॥ ६५ ॥ और हे शुभमते इससे अन्य कौन पदार्थ अब तेरा प्रार्थनीय है ? उसे बेधड़क कह; क्योंकि मेरी दृष्टि में कोई अ पदार्थ ऐसा नहीं है जो कि तेरे लिए देने योग्य न हो । इस श्रीमुखवाणी को सुन मांधाता ने पु प्रणामपूर्वक यह प्रार्थना किया कि यह अनुग्रह हो कि काशीमृत काशी के पापियों के विषय श्री कालभैरव की आज्ञाएँ जो होती हैं वे आज्ञाएँ इस केदारेश्वर के अन्तर्गृह में मृतों के विषय में हुआ करें ॥ ६६ ॥

तदनन्तर श्री परमेश्वर ने कहा कि यद्यपि यह वर दुर्लभ है जिसे कि तू प्रार्थना कर रहा तथापि तू मेरा भक्त है इसलिए यह तेरी प्रार्थना भी पूर्ण होगी और ऐसा कह श्री भगवान् ने का भैरव, माधव, दण्डपाणिभैरव, ढुण्ढिराज तथा काशी के अधिकारी अन्यान्य देवताओं को बुला उनसे कह दिया कि ऐ देवताओं ! सुनते जावो की काशी की इस केदार भूमिमात्र में मृतों को भै यातना न हो अर्थात् पापिष्ठ भी यहाँ के मृत प्राणी तारकोपदेश और मेरे इस वर से यातना के बि ही मुक्ति पाया करें ॥ ६७ ॥ ६८ ॥ ऐसे ही 'केदार' इस नाम का अर्थ भी काशी केदार माहात्म्य ही कहा है अर्थात् अध्याय २८ में सूत का यह प्रश्न है कि "केदार नाम" अर्थात् लौकिक जन

एवं केदारेति नामनिरुक्तिरपि तत्रैव। तथा च २८ अ०—

केदारनाम जगति सस्योत्पादनभूमिषु।
प्रसिद्धं तत्कथं त्वत्र शिवक्षेत्रोपपादितम् ॥८६॥

इति सूतप्रश्ने २६ अध्याये व्यासः—

धर्मार्थकाममोक्षाणां काश्यां केदारभूमिका।
सस्यवृद्धिकरी जाता विश्वेशनगरीबलात् ॥३४॥
काशी सर्वप्राणिनां वै मोक्षदाऽपि शिवाज्ञया।
तत्र केदारभूः पुण्या यतो हिंसा न भैरवी ॥३५॥
एवं चतुर्वर्गसस्य-प्रदा केदारभूमिका।
हिमाचलस्थात्केदारात् काशीकेदार उत्तमः ॥३६॥
यस्मात्साक्षाल्लिङ्गमूर्तिः काश्यामाविर्बभूव ह
हित्वा हिमाद्रिकेदारं विश्वेशकरुणाबलात् ॥३७॥
तस्मान्मोक्षाख्यसस्यकेदार इति वै प्रथा।
एवं केदारनामाभूत्क्षेत्रं काश्यां तथा गिरौ ॥३८॥ इति ॥

केदारशब्दवच्च क्षेत्रतीर्थशब्दयोरपि निरुक्तिरित्यत्रैव प्रकरणे पूर्वमुक्तम्। किं च रुद्र-पिशाचयातनायामयुतत्रयवर्षावधित्वस्य प्रतिपादकानि स्मृतिवाक्यानि काश्यां गङ्गासंनिधानात्पूर्वं कालमभिप्रेत्यैव प्रवृत्तानि गङ्गायां सर्वपातकापनोदनशक्तेः शास्त्रसिद्धत्वात्। तथा च पाराशरमाधवे आचारकाण्डे मरीचिः—

भूमिष्ठमुद्धृतं वापि शीतमुष्णमथापि वा।
गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम् ॥ इति ॥

भाषा

भूमि को केदार कहते हैं जिसमें सस्य ( यव, गोधूम आदि के लघु वृक्ष अर्थात् फल पाकमात्र तक जीने वाली औषधियाँ ) उत्पन्न होते हैं। ऐसी दशा में इस शिवक्षेत्र का क्यों केदार नाम रक्खा गया?

इस प्रश्न पर श्री वेदव्यास ( कृष्णद्वैपायन ) का यह उत्तर है कि "*धर्मार्थकाम*" अर्थात् विश्वेश्वर की नगरी ( काशी ) के प्रभाव से यहाँ (काशी) में यह भूमि धर्म, अर्थ, काम और मोक्ष रूपी सस्य अधिक वृद्धिकारी केदार ( क्यारी ) हुई अर्थात् हिमाचल के केदार की अपेक्षा यह केदार उत्तम है क्योंकि काशी तो अपने में मृत सब प्राणियों के लिए मोक्ष देती ही है परन्तु इसमें भी यह केदार अति पुण्य है क्योंकि श्री शिव की आज्ञा से यहाँ भैरवी यातना नहीं होती और हिमाचल के केदार को त्याग कर यहाँ लिङ्ग का प्रादुर्भाव हुआ। निदान मोक्ष रूपी सस्य की यह क्यारी है, इसलिए इसका नाम केदार है। इति ॥ ३७ ॥ ३८ ॥ कि रुद्रपिशाच यातना के जितने वाक्य हैं वे सब काशी में श्री गंगा के आने से पूर्वकाल के अभिप्राय से हैं। क्योंकि ज्ञान और अज्ञानकृत सब प्रकार के पापों को नाश करने की शक्ति श्री गङ्गा में वेद और शास्त्र से सर्वथा सिद्ध है। जैसा कि मरीचि महर्षि का यह वाक्य है कि "भूमिष्ठ" भूमि में स्थित अथवा भूमि से उद्धृत और शीत (अपने स्पर्श से) अथवा उष्ण

वक्ष्यते चात्रैव तीर्थानुसरणप्रकरणे गङ्गाया माहात्म्यम् । एवं च गङ्गावगाहनगङ्गाजल पानविमुखानामेव काशीवासिनां रुद्रपिशाचयातना भवति । गङ्गाम्बुसेवनकाशीमरणयोरन्तरा लकाले कृतान्येव चाननुष्ठितप्रायश्चित्तानि पातकानि रुद्रपिशाचयातनाहेतुभूतमनुभवन्ती कियानेव तारकोपदेशे विलम्ब इति तु निष्कर्षः। अत एव प्राणोत्क्रमणसमये देशान्तरीयाणा मिव काशीवासिनामपि मुमूर्षूणां प्रायो गङ्गातीरे सन्निधापनं, तदनवसरे तु गंगाजलपानं गङ्गाजलेन स्नपनं चानादिशिष्टाचारपरम्पराप्राप्तमनुभूयते । एवमुपचरितानां च काशीसंस्थि तानां काश्यां कृतपातकानां रुद्रपिशाचयातनाया ऐतिह्यमपि नानुभूयते । किं बहुना ? अन्यत्रापि मृतानां गङ्गायामस्थिक्षेपस्य—

गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् सनातनात् ॥

निर्णयसिन्धौ अस्थिक्षेपे यमः इत्यादिभिर्वाक्यैरेतादृक्फलं श्राव्यते । तत्र कथं गङ्गा सेवनस्य रुद्रपिशाचत्वप्रयोजकस्वपूर्वकालिकपातकजातोच्छेदकतायां संशयावकाशः। अन्यथा काश्यां गङ्गायाः सन्निधानासन्निधानकालयोः फलाविशेषस्वीकारे सर्वथवास्तिक्ये त्रुटिप्रसंगः। अत एव त्रिस्थलीसेतौ ब्रह्मपुराणे रुद्रं प्रति ब्रह्मवाक्यम्—

भाषा

किया हुआ गङ्गाजल उन सब पापों को तुरन्त ही नाश करता है जो कि जन्म भर में किए गये हों और इसी तीर्थानुसरण प्रकरण के अन्त में भी गंगा माहात्म्य का विशेष वर्णन किया जायगा। इससे यही निश्चय होता है कि गंगास्नान और गंगाजल पान के नियम से विमुख जो काशीवासी पापी मनुष्य हैं उन्हीं को काशी में मरने पर भी रुद्रपिशाच की यातना होती है, अर्थात् गङ्गाजल के सेवन और काशीमरण के मध्यकाल में जो पाप किये जाते हैं और उनका प्रायश्चित्त नहीं किया जाता केवल वे ही पाप रुद्रपिशाच की यातना में कारण हैं और उन्हीं के अनुसार बहुत थोड़ी सी यातना होती है, इसी से तारकोपदेश में उतना ही विलम्ब होता है । इसी से काशी में यह शिष्टाचार सनातन से चला आता है कि मरने के समय अन्य देशियों के तुल्य काशीवासियों को प्रायः गङ्गा के तीर ले जाते हैं और यदि इसका अवसर न मिला तो गङ्गाजल से स्नान करा देते हैं और गङ्गाजल पिला देते हैं । तथा इस रीति से जिन मनुष्यों के लिए गङ्गा का उपचार मरण के समय कर दिया जाता है काशी में मरण के पश्चात् उनका रुद्रपिशाच होना सुना भी नहीं जाता । अधिक क्या कहना है जब कि कहीं का मरा हो परन्तु उसकी अस्थि (हड्डी) यदि किसी रीति से गङ्गा में पड़ जाय तो सनातन ब्रह्मलोक से वह कदापि नहीं पलटता अर्थात् जब तक ब्रह्मलोक रहता है तब तक वह वहाँ बास करता है । जैसा कि "गङ्गातोयेषु" इस यम महर्षि के वाक्य में स्पष्ट ही कहा है और ऐसे ही अनेक वाक्य हैं । तो ऐसी दशा में रुद्रपिशाच की यातना के कारणरूपी पापों का उस पुरुष के लिए नाश करना जो कि काशी में मरा है श्री गंगा के लिए बहुत थोड़ी सी बात है । और यह ध्यान देने की बात है कि "किस आस्तिक मनुष्य का हृदय ऐसा है जो कि यह स्वीकार करे कि काशी में गङ्गा के आने से प्रथम जितना लाभ था पश्चात् भी उतना ही लाभ है" । और इन्हीं अभिप्रायों

पञ्चक्रोशप्रमाणन्तु क्षेत्रं दत्तं मया तव ।
क्षेत्रमध्ये यदा गङ्गा गमिष्यति सरित्पतिम् ॥
तेन सा महती पुण्या पुरी रुद्र भविष्यति । इति

एवं च 'यथा' काशीसमागतसकललोकप्रत्यक्षं काश्यां गङ्गायाःस्तब्धवेगत्वं काशीमाहात्म्यलिङ्गं, तथा काशीकृतपापानां जाह्नवीजलजोषिणां काशीमृतानां भैरवयातनाविरहो गङ्गामाहात्म्यलिङ्गमित्यत्र को नाम संशयावकाशः रत्नकनकयोरिव गङ्गाकाश्योरन्योन्यसमागमस्यान्योन्यातिशयाधायकताया औचित्यावर्जितत्वात् । तथा च काशीकेदारमाहात्म्ये पञ्चदशेऽध्याये गङ्गावाक्यम्—

विश्वेशं मणिकर्णीं च संसेव्य निवसेस्थिरा ।
स्तब्धवेगाशनैस्तत्र काश्यां स्थित्वाऽखिलांशतः ॥२४॥
एकदेशांशतो भूपपितॄनुद्धर्त्तुमम्बुधिम् ।
मत्सङ्गतनदीः सर्वा ह्यनुज्ञाप्य पुनर्व्रजे ॥२५॥ इति

अत्र च गङ्गया काश्यामात्मनः स्तब्धवेगत्वं स्थैर्येण स्थितिश्चोक्ते दृश्यते चाद्य यावदपि काशीगङ्गाजलस्य पल्वलसलिलस्येव वेगातिमन्दता काश्यपरित्यागश्च गङ्गायाः सर्वैरेव काशीसमागतैर्जनैः । न चेदमन्यत्र नद्यां गङ्गायामेव वा प्रदेशान्तरे दृष्टं श्रुतं वा केनचित्कदा-

भाषा

हृदय में लेकर ब्रह्मपुराण में श्री रुद्र के प्रति ब्रह्मा ने कहा है कि "पंचक्रोशप्रमाणन्तु" हे रुद्र! पांच कोश का यह क्षेत्र मैंने आपको दिया और जब इस क्षेत्र के बीच से गङ्गा समुद्र को जायँगी तब यह पुरी और भी बड़ी पुण्या हो जायगी । मुझको ऐसा ही सत्य ज्ञात होता है जैसा कि मैंने कहा है । और जब ऐसा है तब जैसे काशी मात्र में गङ्गा का मन्द बेग होना अद्यावधि प्रत्यक्ष आश्चर्य काशी के अद्वितीय माहात्म्य में अटल प्रमाण है वैसे इसमें सन्देह ही क्या है कि जो अनन्तरोक्त ब्रह्मवाक्य के अनुसार, काशीमृत काशी के पातकियों को भैरव यातना का न होना रूपी विशेष, श्रीगङ्गा के सेवन के माहात्म्य का चिह्न है, क्योंकि सुवर्णमुद्रिका और रत्नकणिका के समान काशी और गङ्गा के अन्योन्य में अन्योन्य समागम से ऐसे २ विशेषों का होना क्या आश्चर्य है जैसा कि यह वाक्य है कि— "विश्वेशं" अर्थात् मैं ( गङ्गा ) काशी में, विश्वेश्वर और मणिकर्णिका की सेवा तथा अपने बेग को स्तम्भन करती स्थिर हो, अर्थात् काशी को न छोड़ती ( काशी से सटी ) धीरे धीरे पूर्ण रूप से अब तुरित ही निवास करूँगी और तदनन्तर अपनी साथी नदियों से अनुज्ञा ले राजा ( भगीरथ ) के पितरों के उद्धारार्थ केवल थोड़े अंश से समुद्र को जाऊँगी ॥ २४ ॥ २५ ॥ यहाँ श्रीगङ्गा ने काशी में अपने वेग का स्तम्भन और स्थिरता से वास करना अपने मुख से स्पष्ट ही कहा है जो कि आज तक काशी में श्रीगङ्गा के देखनेवाले सब लोगों को प्रत्यक्ष ही है और काशी के नीचे गङ्गाजल में तडाग जल सरीखी यह बेगशून्यता ऐसी है कि जो अन्य नदियों में अथवा काशी से अन्यत्र गङ्गा ही में कदाचित् किसी की देखी वा सुनी भी हो अर्थात् किसी लौकिक कारण से यह नहीं हो सकता कि

चिदपि यत् पुरस्तात्परस्ताच्च महावेगा महानदी सहसैव मध्येवेगं जह्यात्। वर्षौघसम्भेदात्तु सरस्यादिष्वपि वारिवेगोऽनुभूयमानो यथा न नैसर्गिकस्तथा काश्यां गङ्गायामपि। नापि काशीमाहात्म्यमन्तरेण शक्यमुपपादयितुम्। गाम्भीर्यादिरेतदुपपादकतोत्प्रेक्षाणामावर्तविका-काद्योपपत्तिभिः सुप्रत्याख्यानत्वादिति बोध्यम्।

अपि च अस्मिन् सूक्ष्मतमे वेदैकवेद्ये काशीमृतमुक्तिव्यवस्थाऽऽत्मनि विषयरूपेऽर्वा-चीनानां चर्मचक्षुषामस्मादृशां व्याख्यानानि प्रत्याख्याय, पौराणिकशिरोमणिश्रीसूतमुखा-नूदितत्वेन स्मृतौ निबद्धं दुर्भेदमानतर्कसन्दर्भगर्भं, नितान्तापनीतनिखिलानुपपत्तिकलङ्कं, श्रीमद्भगवत्कृष्णद्वैपायनवेदव्यासहृदयवदनारविन्दनिष्यन्दमानस्फुरद्वेदाक्षरस्वरसैकरसामृत-निर्भरमकरन्दासारगम्भीरोद्गारगौरवितं, परमरमणीयं, व्याख्यानरूपमेव सच्चणीभूय भूयो भूयः शरणीकरणीयं विचक्षणैः। तद्यथा काशीकेदारमाहात्म्येऽष्टाविंशेऽध्याये—

भाषा

किसी जल में आगे और पीछे महाबेग रहते मध्य में दो कोस तक बेग न रहै और वर्ष के जलौघ का बेग तो जैसे तडागादिक में स्वाभाविक नहीं है वैसे काशी की गङ्गा में भी। यदि यह कहा जाय कि काशी की ओर तट भूमि के अति उच्च होने से वहाँ नदी पात्र का अति गम्भीर होना सिद्ध है इसी से बेग नहीं है, तो मध्य निम्न प्रदेश में उच्च प्रदेशों से वेगपूर्वक गिर कर निकलते हुए जलों में भौंर, फेन, खलबली आदि जो विकार लोकप्रसिद्ध हैं वे काशी की गङ्गा में क्यों नहीं हैं तथा काशी के सामने पार का तट तो उच्च नहीं है और 'गम्भीरता' भी उधर अधिक नहीं है, तो वहां क्यों नहीं जलबेग रहता? इत्यादि प्रश्नों का यथार्थ उत्तर देना दुर्घट है इसलिये काशीमाहात्म्य का गङ्गाकृत आदर ही इस वेगमन्दता का वास्तविक निदान है जो कि इस श्लोक में साक्षात् गङ्गा के मुख का कहा हुआ है। (१) यह ब्रह्मवैवर्त का खिल है जिसको काशीमूलरहस्य भी कहते हैं। और पुष्पदन्ताचार्य की कथा तथा उनका रचित विश्व विख्यात शिवमहिम्नस्तोत्र भी इसी काशी-केदारमाहात्म्य में है। तथा तीसरी बात यह है कि काशी में मृतों की मुक्ति सम्बन्धी व्यवस्था यह विषय केवल वेद ही की बनी हुई आँखों से देखने योग्य और उस पर भी बहुत ही सूक्ष्म है इस से इस विषय में हम ऐसे चर्मचक्षुओं की ग्रन्थभित्ता रूपी और अन्योन्य में विरुद्ध तथा कपोल-कल्पित व्याख्यानों का प्रत्याख्यान ही करना उचित ज्ञात होता है परन्तु यदि इस विषय का ठीक ठीक निर्णय ही करना है तो उसके लिये विवेकी बुद्धिमानों को चाहिये कि वे श्रीमान् भगवान् कृष्ण-द्वैपायन वेदव्यास जी के हृदयारविन्द और मुखारविन्द से निकल कर फड़कते हुये, वेदाक्षर के स्वरस से मिल कर उसकी एकरसता को प्राप्त, अमृत (मोक्ष, सुधा और जल) रूपी मकरन्द (पुष्परस) की धाराओं के गम्भीर उद्गार से गौरवित, उस अति रमणीय व्याख्यान ही का शरण लें जो कि पौराणिक-शिरोमणि श्री सूतकृत अनुवाद के रूप से पुराण रूपी स्मृति में उक्त वेदव्यास का निबद्ध किया दुर्भेद्य प्रमाणों तथा तर्कों के सन्दर्भ (मेल) से गर्भित और शङ्कारूपी सकल कलङ्कों को उक्त विषय से निकाल कर दूरोत्सारित करता है और जिसका स्वरूप, पूर्वोक्त काशीकेदारमाहात्म्य के २८ वें अध्याय में इस प्रकार से कहा है कि—

ऋषय ऊचुः—काचिद्विवक्षा नः सूत विद्यते तामुदाहर ।
श्रुत्वा त्वद्वदनाम्भोजाद्भवाम हृतसंशयाः ॥ २३ ॥
धर्मप्रदानि स्थानानि सन्ति लोके बहून्यपि ।
अर्थप्रदानि स्थानानि सन्ति शम्भोर्बहूनि च ॥ २४ ॥
कामप्रदानि स्थानानि तथैवान्यानि सन्ति च ।
मोक्षप्रदानि स्थानानि तथैवेशस्य सन्ति वै ॥ २५ ॥
धर्मार्थकाममोक्षाणां युगपत्सम्प्रदान्यपि ।
एवं शम्भोः परेशस्य तत्तत्फलकराणि च ॥ २६ ॥
काश्यादिपुण्यक्षेत्राणि सन्ति लोकेष्टसिद्धये ।
तीर्थान्यपि तथा लोकवाञ्छासत्फलदानि च ॥ २७ ॥
पुष्कराद्यानि लोकेषु वापीकूपसरांस्यपि ।
तथैव नद्यः पुण्योदा गङ्गाद्या लोकविश्रुताः ॥ २८ ॥
पापक्षयकराश्चापि चतुर्वर्गफलप्रदाः ।
तथैव शिवलिङ्गानि सन्ति स्वायम्भुवानि च ॥ २९ ॥
दर्शनात्पूजनाच्चापि चतुर्वर्गप्रदानि हि ।
काशीविश्वेश्वरादीनि सन्ति दिव्यानि भूतले ॥ ३० ॥
मूर्त्तयोऽपि तथा दिव्याः पुण्यक्षेत्रगताः पराः ।
विघ्नेशदुर्गाविष्ण्वादिबहुभेदविभेदिताः ॥ ३१ ॥
पापक्षयकराश्चापि चतुर्वर्गफलप्रदाः ।
यासां च दर्शनध्यानात्पूजनाद्वन्दनादपि ॥ ३२ ॥
लब्धवाञ्छा भवन्त्येव जना मुक्ता अपि क्वचित् ।
एवं लोके शास्त्रदृष्टतीर्थक्षेत्रैश्च दैवतैः ॥ ३३ ॥

भाषा

"काचिद्विवक्षा०" अर्थात् ऋषि लोगों ने कहा कि हे सूत! हमारे कुछ प्रश्न हैं। उनके उत्तरों को कहिये कि जिससे संशय छूटै और वे प्रश्न ये हैं कि— ॥ २३ ॥

'धर्मप्रदानि०' अर्थात् लोक में धर्म, अर्थ, काम और मोक्ष के पृथक् पृथक् देनेवाले और चारों को एक साथ देनेवाले बहुतेरे काश्यादि रूपी स्थान श्रीशिव के हैं ॥ २४—२६ ॥ ऐसे ही पुष्कर आदि तीर्थ, गङ्गा आदि नदियाँ, वापी, कूप, तडाग, काशी विश्वनाथ आदि दिव्य लिङ्ग और विष्णु गणेश, दुर्गा आदि की दिव्य मूर्त्तियाँ भी बहुतेरी ऐसी हैं कि जो पूर्वोक्त पुरुषार्थों को देती तथा पापों को नाश करती हैं और जिनके दर्शन, ध्यान, पूजन और प्रणाम से भी लोगों के अभिलषित फल सिद्ध होते हैं तथा कचित् २ मुक्ति भी होती है। इस रीति से इन स्थानों, नदियों, लिङ्गों और मूर्त्तियों की

वाञ्छितान्यपि सिद्ध्यन्ति मुक्ता अपि क्वचित्क्वचित् ।
अस्तु वाञ्छाप्रदातृत्वं मुक्तिः सा कीदृशी वद ॥ ३४ ॥
अविद्यावासनाजालपाशबद्धा ह्यनादयः ।
जीवास्तादृग्विधा मुक्ताः स्वात्मज्ञानं विना कथम् ॥ ३५ ॥
अनेकजन्मसुकृतपरिपाकवशान्नृणाम् ।
वेदान्तश्रवणे श्रद्धा भवतीति श्रुतेर्वचः ॥ ३६ ॥
श्रवणान्मनने श्रद्धा तन्निदिध्यासने ततः ।
आत्मा वाऽरे तु द्रष्टव्यः श्रोतव्यः श्रद्धया पुनः ॥ ३७ ॥
मन्तव्यश्च निदिध्यासितव्य इत्याह वै श्रुतिः ।
तदर्थबोधकः शम्भुरेव नान्यो हि वै गुरुः ॥ ३८ ॥
तस्मिन्भक्त्या हि दृढयाऽनन्यया कालपाकतः ।
आगामिसञ्चितौ नाश्य कर्मभोगौ गुरोर्बलात् ॥ ३९ ॥
प्रारब्धमात्रशिष्टः सन् वसेदिति गुरोर्वचः ।
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ ४० ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्तेति हि श्रुतिः ।
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ॥ ४१ ॥

भाषा

सेवा से लोगों के जो अनेक अन्यान्य अभीष्ट सिद्ध होते हैं वे हों परन्तु यह कहिये कि उक्त स्वामी की सेवा का फल जो मुक्ति कही है वह कैसे होती है और कैसी है ? ॥ २७—३४ ॥

क्योंकि अनादि काल से अति प्रौढ़, अज्ञान की वासना रूपी, जाल सरीखे, अति दुर्भेद्य पाश से जकड़ कर बाँधे हुये जीवों की मुक्ति, आत्मज्ञान के बिना कैसे हो सकती है ? ॥३५॥

देखिए, वेद का यह कथन है कि 'अनेक जन्मों में किये हुये पुण्यों से' वेदान्तवाक्य के द्वारा आत्मा के श्रवण ( बोध ) में मनुष्यों की श्रद्धा ( विश्वास ) होती है और श्रवण से, मनन ( आत्म विचार अर्थात् शारीरिक दर्शन ) में तथा मनन से, निदिध्यासन ( आत्मा की अविच्छिन्न ध्यान धारा ) में श्रद्धा होती है और इन श्रवणादि के द्वारा आत्मा का दर्शन ( साक्षात्कार ) संसारी बुद्धिमान जीवों के लिये अवश्य कर्त्तव्य है' और वेदान्त के अर्थ बोध कराने वाले गुरु श्री शिव ही हैं न कि अन्य, क्योंकि गुरु का यह वाक्य है कि "श्रीशिव में अनन्य भक्ति करते करते बहुत काल में उनके ( श्री शिव ) के बल से आगामी कर्मों के फल नहीं होते अर्थात् वह भक्त जो कर्म करता है उसका फल ( सुख वा दुःख ) उसको नहीं भोगना पड़ता तथा पुराना अनन्त पुण्य और पाप का ( खजाना ) नष्ट हो जाता अर्थात् उसका फल ( सुख और दुःख ) भी नहीं भोगना पड़ता केवल प्रारब्ध ( वर्तमान शरीर के आरम्भ करने वाले पुण्य और पाप ) वर्तमान शरीर से भोगना पड़ता है ( इसी दशा को जीवन्मुक्ति कहते हैं ) यही 'यस्य देवे' ( ४०।४१ श्लो० में कही ) श्रुति का अर्थ है और ऐसे ज्ञानी भक्त के लक्षण ये हैं कि उसकी दृष्टि में दुःख और सुख, शान्ति

तुल्यमानावमानश्च धीरस्तुल्यारिमित्रकः ।
वृत्त्याऽऽजगरया तिष्ठन् यावत्प्रारब्धसंक्षयः ॥ ४२ ॥
प्रारब्धक्षयतत्कालमात्रेव परिलीयते ।
न चोत्क्रमो न गमनं जीवोऽहमिति भावना ॥ ४३ ॥
तादृग्जीवस्यैव मुक्तिर्नान्यस्येत्यवदच्छ्रुतिः ।
एतादृग्योग्यता कुत्र प्राणिनां प्राकृतात्मनाम् ॥ ४४ ॥
मुक्तिर्वा कीदृशी तेषां मुक्तेर्भेदोऽस्ति वा पृथक् ।
एतत्संशयनिर्णोदं कुरु सूत महामते ॥ ४५ ॥
इति पृष्टस्तदा सूतो भूसुरैर्ब्रह्मवादिभिः ।
तदा कारुणिकं शम्भुं गुरुं ध्यात्वाऽऽह तान्पुनः ॥ ४६ ॥
शृणुध्वं मुनयः सर्वे सत्यं वक्ष्ये गुरोर्वचः ।
युष्मत्प्रश्नसमाधानवक्ता विश्वेश एव हि ॥ ४७ ॥
तथापि मद्गुरोर्वाक्यमुपदिष्टमहं वदे ।
समर्थः परमेशानः स्वयमेवाखिले हृदि ॥ ४८ ॥
प्रविश्य लीलां तन्वानः स्वशक्त्याऽखिलहृद्गतः ।
स्वात्मभूतस्य जीवस्य स्वशक्त्याऽभेदितस्य च ॥ ४९ ॥

भाषा

और सुवर्ण, मान तथा अपमान, शत्रु तथा मित्र, सब तुल्य होते हैं, तथा अजगर सर्प की वृत्ति अर्थात् स्वतः प्राप्त जीविका से वह जीता है और अन्त में उसके शरीर से प्राण नहीं निकलते क्योंकि वह लोकान्तर को नहीं जाता, किन्तु उसके शरीर ही में लीन हो जाते हैं और वह परब्रह्म हो जाता है अर्थात् "मैं जीव हूँ" इस अनादि भावना की गन्ध भी उसमें नहीं रहती। और श्रुति ने यह कहा है कि ऐसे ही जीव की मुक्ति होती है न कि अन्य की। तब देखिये कि तीर्थादि सेवी सामान्य प्राणियों में ऐसी योग्यता कहाँ हो सकती है ? तीर्थादि सेवी सब प्राणियों की मुक्ति भी तुल्य ही होती है अथवा उन मुक्तियों के अन्योन्य में कुछ भेद होता है। हे महामते सूत ! इन संशयों का निराकरण कीजिए ॥ ३९—४५ ॥

ब्रह्मवादी ब्राह्मणों के उक्त प्रश्नों को सुन, परम दयालु गुरु श्री शिव जी का स्मरण कर सूत ने उन ब्राह्मणों से पुनः कहा कि ॥ ४६ ॥ हे मुनियों ! सुनिये, यद्यपि आपके इन प्रश्नों के उत्तरदाता विश्वनाथ ही हैं ( क्योंकि एक तो यह विषय ही अति सूक्ष्म है दूसरे इसमें अनेक गूढ़ तात्पर्यों के अनुसारी पुराणादि वाक्य ऐसे मिलते हैं जो कि देखने से अन्योन्य में विरुद्ध से ज्ञात होते हैं ) तथापि इस विषय में मेरे गुरु ( भगवान् कृष्णद्वैपायन वेदव्यास ) के उपदेशों को मैं बेधड़क कहूँगा जो ये हैं कि ॥ ४७ ॥ ४८ ॥ जब कि अति समर्थ परमेश्वर, आप ही लीला मात्र के लिये प्रत्येक अन्तःकरणों में अपनी अकुण्ठित शक्ति ( माया ) से प्रविष्ट हो, जीव और प्राणी कहला रहे हैं तब ऐसी दशा में अपनी शक्ति ही से भेदित अपने स्वरूप रूपी जीवों को अपनी शक्ति ही से अपनी

स्वशक्त्यैव पुनः स्वस्मिन् मेलितुं का विलम्बना ।
अकर्तुमन्यथाकर्तुं कर्तुं चापि प्रभुः शिवः ॥ ५० ॥
अस्त्येव स्वात्मके जीवे स्वात्मज्ञानं निरन्तरम् ।
स्वशक्त्या विद्यया भेदज्ञानमात्रनिरासनम् ॥ ५१ ॥
तत्तस्य च कियत्कार्यं स्वाभाविकमितीर्यते ।
परिपूर्णः परानन्दः सर्वत्रास्ति न संशयः ॥ ५२ ॥
यत्र यत्राह भगवान् मुक्तिस्थानेषु तारणम् ।
तत्र देवस्य लीलेयं नामरूपविमोचिनी ॥ ५३ ॥
तदन्यत्र स्वका लीला नामरूपा भवत्विति ।
भोगार्थमिति चाप्यन्ये लीलार्थमिति चापरे ॥ ५४ ॥

भाषा

इच्छा मात्र के अनुसार पुनः अपने में मिला लेने में विलम्ब ही क्या हो सकता है ? (अर्थात् यद्यपि आकाश निरूप, निरवयव है तथापि घट, मठ आदि उपाधि लगा लगाकर घट का (आकाश) मठ का छिद्र इत्यादि लौकिक व्यवहार आकाश ही में खण्ड मान मान कर होता है घट आदि उपाधि जहाँ जहाँ ले जाये जाएँ वहाँ उनमें वे आकाश के छिद्र रूपी खण्ड रहते हैं तथा घटादि उपाधियों के नष्ट होने पर वे छिद्र रूपी खण्ड महाकाश में मिले से हो जाते हैं। ही निराकार परमेश्वर की इच्छा मात्र के अनुसार उनकी माया शक्ति के परिणाम रूपी छोटे अन्तःकरण (जिनको लिङ्ग भी कहते हैं) उपाधियों के लग जाने से परमेश्वर के भी खण्ड हो जाते हैं जिनको जीव कहते हैं और परमेश्वर ही की इच्छा मात्र से लिङ्ग के भंग होने पर वे परमेश्वर में मिल से जाते हैं, इसी अवस्था को सायुज्या मुक्ति कहते हैं) कुछ भी नहीं, और ऐसी में तो विशेष कर के अणुमात्र भी विलम्ब का सम्भव नहीं हो सकता जब कि श्री शिव, सब ही के करने न करने और अन्यथा करने में सदा समर्थ हैं तथा अपने आत्मा रूपी परमात्मा का (मैं हूँ) परमात्मा रूपी प्रत्येक जीवों में आप ही आप बना ही रहता है तो ऐसी दशा में अपने जीवों के मेलनार्थ परमेश्वर का कर्त्तव्य भी केवल इतना ही है कि वह अपनी अकुण्ठित विद्या से जीव की भेदबुद्धि (मैं परमात्मा से भिन्न हूँ) का निराकरण मात्र कर दें सो यह कर्त्तव्य परमेश्वर के लिये इतना सहज काम है कि उनका यह स्वभाव ही कहा जाता है और जैसे कुछ सन्देह नहीं है कि परिपूर्ण (व्यापक) परमानन्द रूपी परमात्मा सर्वत्र हैं वैसे ही इसमें कुछ संशय नहीं है कि जिन स्थानों में मृत प्राणियों के लिए उन्होंने मुक्ति देने की प्रतिज्ञा की वहाँ उनकी वह लीला ही ऐसी है कि जो जीवों के नाम (देवदत्त आदि) और रूप अर्थात् से सदा के लिये छुड़ा देती है क्योंकि जैसे परमेश्वर की इच्छा ही ऐसी है कि मुक्तिस्थानों से अन्य मृत अज्ञानी जीवों को संसार लगा ही रहे वैसे मुक्तिस्थानों में मृत जीवों के विषय में उनकी इच्छा वैसी है क्योंकि वह अत्यन्त स्वतन्त्र हैं ।

एष देवस्य महिमा जगज्जीवात्मिका स्वका ।
तस्मादत्र च सन्देहो न कर्त्तव्यः कदाचन ॥ ५५ ॥
अनेककोटिजीवानां राशिभेदेन भेदिता ।
लीला देवस्य मुनयस्तेषु वै जीवकोटिषु ॥ ५६ ॥
शिवप्रसादसत्क्षेत्रतीर्थेषु कति सन्ति वै ।
पञ्चाशत्कोटिविस्तीर्णयोजना भूः प्रमाणिका ॥ ५७ ॥
आपातालब्रह्मलोकमध्येऽपि प्राणिनां कुलम् ।
भूमावपि समस्तायां प्राणिनां पूरणं सदा ॥ ५८ ॥
तादृशे बहुविस्तारे कियद्देवप्रसादजम् ।
भूप्रदेशस्थलं विप्रास्तस्मिन्वा कति जीवकाः ॥ ५९ ॥
मुच्यन्ते कर्मवशतः प्रसादात्परमात्मनः ।
तत्रापि तारतम्योऽस्ति मुक्तेर्भेदः पृथक् पृथक् ॥ ६० ॥

भाषा

और यद्यपि इस नाम रूपी जगत्सृष्टि को ब्रह्माद्वैतवादी, केवल लीलार्थ ही मानते तथा अन्य दार्शनिक इस सृष्टि को जीवों के भोगार्थ मानते हैं तथापि सिद्धान्त यही है कि जीव और जगत् ये दोनों परमेश्वर की साक्षात् महिमा मात्र ही हैं । इसलिए यह अटल निर्णय है कि परमेश्वर की आज्ञा से मुक्तिस्थानों में मृत प्राणियों की मुक्ति अवश्य ही होती है अर्थात् इसके विषय में कदापि किसी कारण से कुछ भी सन्देह नहीं करना चाहिए ॥ ४९–५५ ॥ और इस पर यह आक्षेप नहीं करना चाहिए कि मुक्ति यदि ऐसी ही होती चलै तब तो मुक्ति होते होते जीवों के निशेष होने से सदा के लिये सृष्टि का कदाचित् लोप ही हो जाना चाहिये क्योंकि हे मुनियों ! प्रत्येक जीवों की संख्या तो हो ही नहीं सकती बल्कि जीवों के समूहों की संख्या भी अनेक कोटियों से अधिक अर्थात् अनन्त है क्योंकि जब परमेश्वर की लीला मात्र से जीवों का भेद है जैसा कि अभी कहा जा चुका है तथा उनकी लीला अनन्त हैं तब जीवों की संख्या के अनन्त होने में सन्देह ही नहीं हो सकता और अनुभव भी ऐसा ही है कि इस ब्रह्माण्ड के उदर का प्रमाण, पचास कोटि योजन ( दो अब्ज अर्थात् अरब ) कोस का है । और पाताल से ब्रह्मलोक पर्यन्त नीचे से ऊपर तक इस ब्रह्माण्ड में स्थल, जल वा आकाश का कोई अङ्गुल मात्र भाग भी ऐसा नहीं है जो कि प्राणियों से सर्वथा शून्य हो अर्थात् सम्पूर्ण ब्रह्माण्ड चाक्षुष यन्त्र से लक्ष्य परम सूक्ष्म कृमि, चींटी, टीड़ी, लीख, चीलर, मशक आदि से लेकर इन्द्रादि पर्यन्त प्राणियों से सदा व्याप्त रहता है, तो ऐसी दशा में केवल पृथिवी के कतिपय मुक्तितीर्थ, इस इतने बड़े ब्रह्माण्ड में वैसे ही हैं जैसे कि समुद्र में परमाणु और उनमें स्थित प्राणियों की संख्या ही कितनी हो सकती है ? और उनमें स्थित प्राणियों की अपेक्षा भी उनमें मृतों की संख्या तो अति ही अल्प है । अपने को मिथ्या ही शास्त्रज्ञ मानने वाले अल्पज्ञ तो अनन्तरोक्त आक्षेप के भय से सायुज्या मुक्ति के अनन्तर भी मुक्त जीव का आगामी महाकल्पान्तर में पुनर्जन्म मान बैठे हैं ॥ ५६–६० ॥ तथा तीर्थ मृतों की मुक्ति के भी अनेक भेद हैं अर्थात् किसी २ तीर्थ में पाप से

पापमुक्तिर्मुक्तिरिति ख्याता केषु स्थलेषु चित् ।
अथवा केषु चित् ख्याता सालोक्या मुक्तिरुत्तमा ॥ ६१ ॥
केषु चिच्चैव सामीप्या सारूप्या केषुचित्स्मृता ।
नियम्यत्वं नियन्तृत्वं यावज्जीवेशयोः स्थितम् ॥ ६२ ॥
तावन्मुक्तिर्न सायुज्या इति वेदान्तनिर्णयः ।
स्वर्गादिलोकसालोक्यं सारूप्याद्याश्च मुक्तयः ॥ ६३ ॥
पुनरावृत्तिदाः काश्चित् काश्चिन्नावृत्तिदा अपि ।
इत्यादयो मुक्तिभेदा मुक्तिस्थानेषु सन्ति वै ॥ ६४ ॥
एतेषु मुक्तिस्थानेषु तारतम्याश्च मुक्तयः ।
शिवप्रसादो येष्वस्ति तेषां वृत्तिः पुनर्न हि ॥ ६५ ॥
अथवाऽप्यस्ति चेत्सापि काशीप्राप्तिकरा ध्रुवम् ।
काशीप्राप्त्यै वा भवेत्सा नोचेत्तत्रैव च क्रमात् ॥ ६६ ॥
हा ऊ गायन्स्वेच्छया ते परब्रह्मणि मोदिताः ।
सालोक्यसामीप्यभाजः सारूप्या अपि ते क्रमात् ॥ ६७ ॥
समुत्तिष्ठन्ते च कामास्तेषां संकल्पमात्रजाः ।
चिरकालं तथा भुक्त्वा कामान्संकल्पमात्रजान् ॥ ६८ ॥
क्रमेण तेषु वैराग्यं प्राप्य कामेषु ते नराः ।
सर्वं तुच्छमिति ज्ञात्वा परे ब्रह्मणि संलयन् ॥ ६९ ॥
स्वयमात्माऽनुसंधानात्सायुज्यां मुक्तिमाप्नुयुः ।
तादृशी मुक्तिरत्रैव काश्यां सद्यो न संशयः ॥ ७० ॥
यथा स्थानविशेषु विविधा मुक्तिरीरिता ।
न तादृशी मुक्तिरत्र काश्यां मुक्तिर्विलक्षणा ॥ ७१ ॥

भाषा

छूटना मात्र रूपी मुक्ति होती है और किसी में 'सालोक्या' (स्वर्गादि लोकों में वास) किसी में "सामीप्या" (शिव, विष्णु आदि के समीप वास) और किसी में 'सारूप्या', (शिव, विष्णु आदि तुल्य, शरीर, के वाहन आदि का लाभ) मुक्ति होती हैं तथा इनमें से किसी २ मुक्ति के अनन्तर कभी २ किसी २ प्राणी को परमेश्वर के अनुग्रहानुसार वैराग्य होने से पुनर्जन्म नहीं होता और पुर्जन्म न होने ही को 'सायुज्या' मुक्ति और विदेह कैवल्य भी कहते हैं । तथा उक्त तीन मुक्तियों के अनन्तर जो पुनर्जन्म होता है उसमें भी परमेश्वर के अनुग्रहानुसार किसी २ प्राणी को काशीमरण से सायुज्या मुक्ति होती है अन्य को नहीं, परन्तु अनुग्रह भी परमेश्वर का उन २ मुक्ति तीर्थों में मरण ही के अनुसार हुआ करता है और वेदान्तवाक्यों के अनुसार, सायुज्या मुक्ति के स्वरूप का यह निर्णय है कि जीव में ईश्वर की पराधीनता का न रहना 'सायुज्या' मुक्ति है अर्थात् जब तक जीव की ईश्वर से अपने में भेद बुद्धि नहीं हटती तब तक जीव ईश्वर के अधीन रहता है, इसी से इस दशा में 'सायुज्या' मुक्ति नहीं होती ॥६१—७१॥ और इसमें सन्देह नहीं है कि अन्यान्य मुक्तितीर्थों में मरण से जैसी मुक्ति होती

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
यस्मिन्याति लयं सर्वं तदेवात्रस्थजन्तवः ॥ ७२ ॥
तदात्मका भवन्त्येते इति वेदानुशासनम् ।
काश्यां कृताघजीवानां मुक्तौ भैरवयातना ॥ ७३ ॥
साऽपि क्षणायते शंभोस्तारकादेशहेतुतः ।
प्राणेषूत्क्रममाणेषु जन्तोरत्र सदाशिवः ॥ ७४ ॥
व्याचष्टे तारकमिति श्रुतिराह सनातनी ।
कोऽन्यथा कर्तुमीशस्तां भोगस्यावसरः कुतः ॥ ७५ ॥
पश्यत ब्राह्मणाः शम्भोः प्रसादोऽत्रास्ति कीदृशः ।
अवश्यमनुभोक्तव्या भैरवी यातना यदि ॥ ७६ ॥

भाषा

है काशीमरण से उसकी अपेक्षा विलक्षण अर्थात् सायुज्या मुक्ति होती है सो भी क्रम से नहीं किन्तु मरण के उपरान्त तुरत ही होती है अर्थात् यह वेदोक्त बात है कि जिस ( परब्रह्म ) से विश्व की उत्पत्ति होती है और जो विश्व में व्याप्त है अर्थात् जिससे तना हुआ विश्व खड़ा रहता है तथा विश्व अन्त में जिसमें लीन होता है, काशी के मृत प्राणी सब उसी में प्राप्त अर्थात् परब्रह्म रूपी होकर पुनः संसारचक्र में कदापि नहीं आते ॥ ७२ ॥ ७३ ॥

केवल विशेष इतना है कि काशी में पाप कर उसका प्रायश्चित्त किये बिना काशी में मृत जीवों को भैरवयातना होती हैं किन्तु उसका समय ( चाहे लोकदृष्टि में अधिक भी हो ) परन्तु शम्भु-कृत तारकोपदेश के प्रताप से उस जीव को क्षण मात्र के तुल्य ही ज्ञात होता है क्योंकि 'अत्र हि जन्तोः *प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति*' ( यहाँ प्राणी [ सर्व-साधारण मृत जीव ] के प्राण निकलते समय सदाशिव, तारक ब्रह्म का उपदेश करते हैं जिससे वह प्राणी तत्त्वज्ञानी हो मोक्ष पाता है, यह सनातनी श्रुति ( नित्य निर्दोष वेदवाक्य अर्थात् पूर्व ही उद्धृत जाबालोपनिषद् ) ऐसा ही कहती है अर्थात् पुण्यात्मा वा पापात्मा और मनुष्य वा पशु आदि का विशेष न कर काशीमृत सब प्राणियों के लिए मृत्यु समय ही में तुल्य रूप से तारकोपदेश के होने को यह श्रुति, स्पष्ट ही कहती है और इस श्रुति के अर्थ में तिल मात्र भी इधर उधर के दुर्बल प्रमाणों के अनुसार खींच खाँच करने का सामर्थ्य किसको है ? किसी को नहीं, तो ऐसी दशा में काशीमरण के अनन्तर सालोक्यादि गौण मुक्तियों के सुख वा भैरवयातना रूपी दुःख के भोग का अवसर कैसे हो सकता है ? कदापि नहीं, क्योंकि 'मोक्ष' शब्द का 'सायुज्या' मुक्ति ही मुख्य अर्थ है और सालोक्यादि मुक्तियाँ तो गर्भवास न होने मात्र से उसके तुल्य होने के कारण मुक्ति कही जाती हैं इसी से उक्त श्रुति में 'मोक्ष' शब्द से 'सायुज्या' मुक्ति ही का ग्रहण है तथा जब मरते समय जीव को भगवान् के श्रीमुख से तारकोपदेश हो चुका तब ब्रह्मज्ञान और मोक्ष में क्या विलम्ब हो सकता हैं । हे ब्राह्मणो ! देखिए, काशी में शम्भु का यह कैसा अनुग्रह है ! ॥७४—७६॥

साऽपि तत्क्षण एवात्र जन्तोरुत्क्रमकालगा ।
प्रदृश्यते भुक्तवत्सा मायया परमेशितुः ॥ ७७ ॥
क्षणं युगायते जन्तोर्युगमर्द्धक्षणायते ।
परेशमायया साऽपि लोकभीतिप्रदायिनी ॥ ७८ ॥
धर्मलोपो यथा न स्यादस्मत्क्षेत्रबलाज्जने ।
तथा शिवानुग्रहात्सा यातनेति भयप्रदा ॥ ७९ ॥
साऽस्तु वा माऽस्तु वा काश्यां केदारे नास्ति संशयः ।
आज्ञा बलवती शम्भोः प्रत्यक्षा शास्त्रचोदिता ॥ ८० ॥

भाषा

यदि काशी के पापियों के लिए भैरवयातना अवश्य है तो वह भी मरण ही के क्षण में हो जाती है क्योंकि जैसे परमेश्वर की माया शक्ति से एक क्षण भी युग सा हो जाता है वैसे ही युग भी एक क्षण सा हो सकता है अर्थात् मरण ही के समय क्षणमात्र में भैरवी यातना समाप्त हो जाती है यहाँ तक कि उतने सूक्ष्म समय में वह जीव उस अपनी यातना के वर्तमान अवस्था का पूर्ण साक्षात्कार भी नहीं कर पाता कि 'मुझे यातना हो रही है' किन्तु पश्चात् उसे स्मरण करता है सो उतनी यातना भी विभीषिका मात्र ही है न कि वास्तविक दण्ड और उसका वास्तविक प्रयोजन यह है कि काशीमरण से मोक्ष होने के बल से लोग धर्म छोड़ अधर्म ही अधिक करने न लग पड़ें तथा काशीमृतों के श्राद्धादि कर्म को न छोड़ बैठें जिससे कि धर्म का लोप हो जाय । तात्पर्य यह है कि पौराणिक वाक्यों और आख्यायिकाओं में भैरवी यातना के भयानक स्वरूप और अधिक समय का कथन, काशी में धर्मसम्प्रदाय के रक्षार्थ केवल विभीषिका मात्र है क्योंकि यदि ऐसा न माना जाय तो उक्त जाबाल श्रुति के अनन्तरोक्त अक्षरानुसारी और युक्तियुक्त तात्पर्य से विरोध पड़ने के कारण वे यातनावाक्य सर्वथा अप्रमाण ही हो जायँगे तथा रुद्रपिशाच के उपद्रव और गयाश्राद्ध याचन आदि का ऐतिह्य ( कहानी ) भी उक्त पौराणिक यातनावाक्य अथवा शंका मात्र के अनुसारी होने से सर्वथा अप्रामाणिक ही हैं क्योंकि कहाँ उक्त जाबाल श्रुति और कहाँ यह ऐतिह्य ! और यदि वह ऐतिह्य, प्रत्यक्षमूलक भी हो तो वह प्रत्यक्ष ही अलातचक्र (बरेठी का मण्डलाकार) के प्रत्यक्ष के समान केवल भ्रम ही है । अर्थात् काशी के पापी जो अन्यत्र मृत हों काशी में रुद्रपिशाच होते हैं ( जैसा कि पूर्व ही कहा गया है ) वे ही, काशीमृत अन्याय मनुष्यों के नाम से अपने को बतला कर उपद्रव करते होंगे क्योंकि प्रसिद्ध है कि लड़का और पिशाच की बातों का कुछ भी ठिकाना नहीं है । सो, ऐसी क्षणिक भैरवयातना भी काशी के अन्य प्रदेशों में मृतकाशी के पापियों को हो वा न हो, परन्तु इस काशी केदारनाथ के अन्तर्गृह में मृत पापियों के विषय में तो यह अचल निश्चय है, उतनी सी भी भैरवी यातना नहीं होती, क्योंकि प्रत्यक्ष और शास्त्रोक्त श्रीशिव की आज्ञा बलवती है ॥७७-८०॥
निदान जब कि अपने इतने बड़े ब्रह्माण्ड में श्री शिव की आज्ञा से सिद्ध मुक्ति क्षेत्र, समुद्र में एक परमाणु के तुल्य बहुत थोड़े से भी बहुत थोड़े हैं और उनमें भी कतिपय ही प्राणियों ( जो वहाँ मरते हैं ) की मुक्ति होती है तो इतने से ईश्वरसृष्टि में क्या हानि हो सकती है ? तथा यह वैदिक

भजिर्ब्रह्मज्ञाने गौण इति शङ्काऽपि निरस्यते। ननु भगवद्गीतावाक्यानि न शब्दविधया वेदवत्प्रमाणम् किन्तु भारतस्मृतित्वेनैवँ, तथा च कथमत्र सूत्रे शब्दादिति निर्देश इति चेन्न 'शब्दादित्यस्य बहूनां जन्मना' मिति स्मृत्याऽनुमितात्तत्समानार्थकवेदवाक्यरूपाच्छब्दादि-त्यर्थकत्वेनादोषात्। शाण्डिल्यसूत्रभाष्यकृतस्तु अदृष्टार्थकभगवद्वाक्यत्वमेव वेदत्वम् तच्च भगवद्गीतास्वप्यविशिष्टम् अत एव "भगवद्गीतासूपनिषत्सु' इति दृश्यते केवलं त एव श्लोका व्यासेनोपनिबद्धाः तथा च पुराणान्तरम्।

गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥ इति ॥

न चैवं शूद्राणामश्रवणप्रसङ्गः भारतश्रवणाभ्यनुज्ञानेनैव तदुपपत्तेः प्रणवादिश्रुत्यादि-वत्। तद्विहायेति चेन्न लक्ष्यताया अपरिपूर्त्तेः तथा चोक्तमाचार्यैः—

तानेव वैदिकान्मन्त्रान्भारतादिनिवेशितान्।
स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते ॥ इति ॥

भाषा

उ० २—शाण्डिल्य महर्षिकृत मीमांसादर्शन के भाष्यकार स्वप्नेश्वर पण्डित ने तो उक्त प्रश्न का यह उत्तर दिया है कि इस सूत्र में 'शब्द' पद का वेद ही अर्थ है। और गीता भी वेद ही है, क्योंकि अन्य प्रमाणों से जो विषय ज्ञात नहीं होता उसका बोध कराने वाला, भगवान् का वाक्य ही वेद कहा जाता है न कि अपौरुषेय वाक्य। तथा गीता भी जब भगवान् का वैसा ही वाक्य है तब यह, और कैसे नहीं वेद है ? इसी से गीता के अध्यायों की अन्तिम पुष्पिकाओं में "भगवद्गीतासु उपनिषत्सु" ऐसा देखा जाता है जिससे यह सिद्ध है कि भगवद्गीता, उपनिषद् ( वेद ) है। और यह गीता व्यास की रचित नहीं है किन्तु श्री कृष्ण भगवान् की रचित है। व्यास ने तो इसको केवल अपने महाभारत में डाल दिया है जैसा कि पुराणान्तर में कहा है कि—

"गीता सुगीता" अन्य शास्त्रों से क्या फल है ? केवल गीता को भली भाँति पढ़ना चाहिये जो कि भगवान् के मुख कमल से साक्षात् निकली है। और यह शंका तो नहीं करनी चाहिये कि गीता यदि वेद है तो शूद्र कैसे इसका श्रवण करेंगे ? क्योंकि जब "श्रावयेच्चतुरो वर्णान्" इस वाक्य के अनुसार भारत के श्रवण में शूद्र का अधिकार है तो गीता के श्रवण में भी अधिकार हो ही गा, क्योंकि शूद्रों के अधिकार ही के लिये व्यास ने गीता को भारत में डाल दिया है। तथा यह भी ध्यान नहीं करना चाहिए कि जैसे शूद्र के अधिकार वाले तान्त्रिक मन्त्र, ओङ्कार को निकाल कर शूद्रों को सुनाये जाते हैं वैसे गीता को निकाल कर महाभारत, शूद्रों को सुनाना चाहिये, क्योंकि तब वह महाभारत पूर्ण ही नहीं होगा किन्तु खण्डित ही रहेगा। और इसी अभिप्राय से आचार्यों ने कहा है कि—

"तानेव०" वे ही वैदिक मन्त्र जब भारत आदि में डाल दिए गये तब लौकिक वाक्यों की नाईं उनके सुनने में शूद्र को भी अधिकार है अर्थात् उन मन्त्रों के विषय में वेद का कोई नियम नहीं रहता।

इति समादधिरे । नापि श्रद्धारूपा,

यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवति

इति श्रुत्या हि श्रद्धायाः साधारण्येन सर्वकर्माङ्गत्वम्प्रत्याय्यते भगवद्भक्तस्तु न सर्वकर्माङ्गत्वमस्तीति श्रद्धात्वव्यापकस्य सर्वकर्माङ्गत्वस्याभावादेव भक्तेः श्रद्धात्वासम्भवात् किञ्च भक्तेः श्रद्धात्वे—

श्रद्धावान्भजते यो मां स मे युक्ततमो मतः । ( गी० अ० ६ श्लो० ४७ )

इति भगवद्वाक्येन भक्तिश्रद्धयोः कार्यकारणभावस्य बोधनादात्माश्रयप्रसङ्गः व्यक्तिद्वयकल्पनया तत्परिहारे त्वन्योन्याश्रयापत्तिः व्यक्तित्रयकल्पने तु चक्रकग्रासः ततोऽप्यधिकव्यक्तिकल्पनया तद्वारणे त्वनवस्था दुर्वारा । तथा च—

नैव श्रद्धा तु साधारण्यात् ॥ १४ ॥

तस्यास्तत्वे चानवस्थानात् ॥ १५ ॥

( भ० मी० द० अ० १ आ० २ )

इति सूत्रे । अपि च "श्रद्धाभक्तिसमन्वित" इत्यादौ श्रद्धाभक्त्योः पृथङ्निर्देशान्न कथञ्चिदपि भक्तेः श्रद्धात्वम् विश्वासो हि श्रद्धा । नापीच्छारूपा इच्छायामसिद्धविषयकतानियमात् भक्तौ तदभावात् तथा च किमात्मिकेयं भक्तिरिति चेत्—

अत्रोच्यते रागस्तावदयमन्तःकरणस्य वृत्तिविशेषो भजामि रज्यामि प्रपद्य इत्याद्यनुव्यवसायसाक्षिक आकीटपतङ्गमाहिरण्यगर्भञ्च यावत्स्वेव प्राणिष्वोतप्रोतायमानत्वान्नापह्नोतुं

भाषा

प्र०—यदि यह भक्ति, ज्ञानरूपी भी नहीं है, तो इसका क्या स्वरूप है ?

उ० १—यह भक्ति श्रद्धा रूपी है ।

खं० १—जब कि श्रद्धा के बिना, किये हुये किसी धर्म का फल नहीं होता जैसा कि "*यदेव श्रद्धया०*" इस वेदवाक्य में कहा है । और भगवद्भक्ति के बिना भी केवल धर्मबुद्धि से यज्ञादि कर्म सफल होते हैं तब भक्ति, कैसे श्रद्धारूपी हो सकती है ?

खं० २—"*श्रद्धावान् भजते०*" जो श्रद्धावान् योगी मेरी भक्ति करता है उसको मैं बड़ा योगी समझता हूँ । इस गीतावाक्य में श्रद्धा को भक्ति का कारण कहा है इससे भक्ति, श्रद्धारूपी नहीं है । क्योंकि कारण से कार्य, भिन्न होता है न कि जो कारण है वही कार्य है । और इसी तात्पर्य से शाण्डिल्य महर्षि का यह सूत्र है कि "*नैव श्रद्धा तु साधारण्यात्०*" ( भ० मी० द० अ० १ आ० २ ) ॥ १४ ॥

खं० ३—"*श्रद्धाभक्ति समन्वितः०*" इत्यादि वाक्यों में श्रद्धा से पृथक् भक्ति कही हुई है क्योंकि श्रद्धा नाम विश्वास का है न कि भक्ति का । इससे भी भक्ति, श्रद्धा से अन्य ही है ।

प्र०—जब कि भक्ति श्रद्धारूपी भी नहीं है तब इस भक्ति का क्या स्वरूप है ?

उ०—इच्छा ही भक्ति है, क्योंकि ऐसा कहा जाता है कि "भक्त भगवान् को चाहता है"

खं०—इच्छा में यह नियम है कि वह असिद्ध ही की होती है अर्थात् जो सिद्ध है उसकी

शक्यते अयमेवासाद्यालम्बनविशेषांस्तदनुसारेण विहितान्प्रतिषिद्धाननुभयविधाँश्च व्यवहारानविरतमाहरन् रत्यनुरक्तिमायामोहादिशब्दैरपि लोके व्यवह्रियमाणोऽर्थधर्मादीन् कामक्रोधादीन् सुखान्दुःखांश्च वर्गाननुबध्नन् विजयते यथा च कुल्यासलिलप्रवाहः केदारपङ्क्तिकामाक्राम्य तदायामविस्तरात्रिचतुरकोणत्वाद्याकारीभूयात्मानं तामिव भावयति तथा रागोऽपि तत्तदालम्बनानामाकारानुररीकुर्वन्नात्ममयीभूतान्प्राणिनस्तन्मयी भावयति। अत एव चेमं कामिनीविषयं स्थायिपदेन व्यपदिश्य विगलितवेद्यान्तरत्वादिरूपदशाविशेषविशेषितं रसपदेन शृङ्गारपदेन च व्यवहरन्ति, व्यवहरन्ति च गुर्वादिष्वालम्बनविशेषेषु सञ्चारिव्यभिचारिशब्दाभ्यां रसविद्याविदः। किं बहुना यत्र—

रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति

इति श्रुतिः 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति तदनुसारि भरतमहर्षिसूत्रं च रसशब्देनैनमेव प्रतिपादयति। अयमेव च निरतिशयम्भगवन्तमालम्बनमासादयन् भक्तिरित्युच्यते। गुर्वाद्यनुरागेषु भक्तिपदप्रयोगस्तु गौण इत्युपरिष्टात्स्फुटी भविष्यति। तथा च सस्वप्नेश्वरभाष्यं सूत्रम्—

नन्नु तथापि भक्तेरागरूपत्वे किं प्रमाणमित्यपेक्षायामाह—

भाषा

इच्छा नहीं होती जैसे जिसको जिस पदार्थ का लाभ हो चुका है वह उस पदार्थ के लाभ की इच्छा नहीं करता और भक्ति में यह नियम नहीं है। जैसे मिले हुए पिता आदि और मिलने वाले गुरु आदि में भी भक्ति होती है। इसलिए भक्ति, इच्छा से भी अन्य ही है। इस विचार से यह सिद्ध होता है कि भक्ति का कोई स्वरूप ही नहीं है।

सिद्धान्त—अन्तःकरण का वृत्ति विशेषरूपी राग (प्रेम) एक ऐसा अति प्रसिद्ध पदार्थ है जो कीट-पतंग से लेकर ब्रह्मदेव पर्यन्त सभी के हृदय में प्रकाशमान है, इसी से उसके लिये किसी प्रमाण की कुछ भी आवश्यकता नहीं है। बल्कि सभी सांसारिक व्यवहार उसी से चलते हैं अर्थात् यदि वह न हो तो एक दूसरे का कोई प्रयोजन न रह जाय। और उसी से काम, क्रोध आदि लौकिक तथा धर्म, अधर्म आदि पारलौकिक अच्छे और बुरे सब उत्पन्न होते हैं। और जैसे खेतों में जब पानी जाता है तब क्यारिओं के अनुसार उसकी लम्बाई, चौड़ाई आदि आकार हो जाते हैं वैसे ही यह राग भी जिसका जिस पर होता है उसको तन्मय बनाने के लिए तदाकार हो जाता है। इसी से साहित्य विद्या के आचार्य लोग प्रथम, इस राग को स्थायीभाव कह कर पुनः जब इस राग की अवस्था पूर्ण अखण्डानन्द रूपी हो जाती है तब इसे 'शृङ्गार' और गुरु, देवता आदि के विषय में इस राग को संचारीभाव भी कहते हैं। अधिक क्या कहना है जब कि वेदवाक्य "रसो वै सः" इत्यादि भी इसी 'राग' को रस शब्द से कहते हैं और संगीत शास्त्र के आचार्य भरत आदि महर्षि भी इसी 'राग' के प्रति कारण होने मात्र से श्रुति, स्वर, ग्राम, तान, मूर्च्छना आदि के समुदाय रूपी भैरव, मालव, कौशिक, हिण्डोल आदि को भी 'राग' कहते हैं और यही राग, जब जगत् के महागुरु परमे-

द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः। ( भ० मी० द० अ० १ आ० सू० ६ )

भक्तिः खलु राग एव भवितुमर्हति कुतः द्वेषं प्रति विरोधित्वात् लौकैर्हि द्वेष्टाऽयम् भक्तोऽयमिति विरुद्धधर्माविति व्यवह्रियते तत्र द्वेषविरोधी च राग एव प्रसिद्धो न ज्ञानादिः। एवं च वैष्णवे भगवति शिशुपालस्य द्वेषानुबन्धमभिधाय "अयं हि भगवान् कीर्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमता"मित्युक्तम्। तथा च अत्रिस्मृतौ—विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन्।

शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः॥ इति

अत्रापि द्वेषविरोधित्वेन भक्तेरभिधानम्।

तथा च गीतासु—मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥ (गी० अ० १६।१८) इति

अत्र च तद्विरोधिनी च भक्तिरीश्वरविषयैवानुरक्तिरिति युज्यते किं च "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति ब्रह्मानन्दाविर्भावलक्षणमुक्तेर्ब्रह्मगोचररसस्य हेतुताऽवगम्यते

भाषा

श्वर के विषय में होता है तब इसे भक्ति कहते हैं। और इसी अभिप्राय से यह सूत्र भी है कि "*द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः*" ( भ० मी० द० अ० १ आ० १ सू० ६ ) इसका अर्थ यह है कि भक्ति राग ही है क्योंकि यह, द्वेष का विरोधी है क्योंकि लोक में "यह द्वेष्टा ( द्वेष करने वाला ) है" "यह भक्त है" ऐसे व्यवहार से द्वेष और भक्ति के अन्योन्य में विरोध प्रसिद्ध है। तथा यह भी प्रसिद्ध है कि द्वेष से भी भगवान् की चर्चा और स्मरण करने वालों को ऐसा फल मिलता है जो सब देवता और दैत्यों को दुर्लभ है और अच्छे भक्तों को तो कहना ही क्या ! तथा अत्रि महर्षि की स्मृति में भी यह कहा है कि—

"*विद्वेषादपि०*" भगवद्भक्त के मोक्ष मिलने की तो बात ही क्या है ? जब कि दमघोष का पुत्र ( शिशुपाल ) भगवान् को द्वेषपूर्वक स्मरण करने से भी मोक्ष को प्राप्त हुआ। यहाँ भी भक्ति और द्वेष का अन्योन्य विरोध स्पष्ट है। तथा गीता में भी "*मामात्मपरदेहेषु०*" जो नराधम अपने और पराये देहों में मुझसे द्वेष करते हैं वे आसुरी योनियों में अनेक जन्म पा कर अधम गति को प्राप्त होते हैं, मुझको नहीं पाते। ऐसा कहने से भक्ति और द्वेष का अन्योन्य में विरोध प्रकाश किया गया है। तथा विष्णुपुराण में भी रामलक्ष्मणादि का स्वर्गारोहण कह कर यह कहा है कि कोसल-नगर और देश के जो लोग श्रीराम के अनुरागी थे वे भी उनके लोक को गए। यहाँ तो 'अनुराग' शब्द से स्पष्ट ही भक्ति कही हुई है। इन सब प्रमाणों से भक्ति, रागरूपी है तथा—

"*रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति०*" यह आत्मा रस ही को पा कर आनन्द रूपी मोक्ष को

रसश्च रागः "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इत्यादौ प्रसिद्धः अत्र रसो रागः तथा च वैष्णवे एव रामलक्ष्मणादीनां स्वर्गारोहणमुक्त्वा "येऽपि तेषु भगवदंशेष्वनुरागिणः कोशलनगरजनपदस्थास्तेऽपि तन्मनसस्तत्सलोकतामापुः" इति साक्षादेवानुरागशब्दो भक्तौ प्रयुक्त इति तस्मादपि न ज्ञानं किन्तु अनुरागरूपैव भक्तिर्निःश्रेयसफलेति। ननु द्वेषविरोधित्वं न रागत्वे लिङ्गम् उदासीनेष्वनैकान्त्यादिति चेत् उच्यते द्वेषकार्यं निवृत्तिस्तद्विरोधिनी च प्रवृत्तिः। भवति तु भक्तानां भजनीयानुवर्तनादौ प्रवृत्तिस्तद्विरोधिनां तदनुवर्तनादेर्निवृत्तिः।

एवं च कार्यमुखेन विरोधिनमभिप्रेत्य द्वेषप्रतिपक्षेत्युक्तम् तथा च प्रयोक्तव्यम् भक्तिः भजनीयगोचररागरूपा, तदनुवर्तनादिहेतुतत्साधनताधीभिन्नात्मविशेषगुणत्वात् यन्नैवं तन्नैवं यथा द्वेष इति। रागोत्कर्षेण तदनुवर्तनाद्युत्कर्षस्य दृष्टत्वाच्च किं च यो यत्र भक्तस्तत्र तस्यौदासीन्याभावेऽवगते, भक्तिः तादृशानुवर्तनाद्यनुकूलद्वेषविरोधिगुणरूपा, अनुवर्तनहेत्वात्मविशेषगुणत्वात् इष्टसाधनताधीवत् इति साधनताधीत्वबाधसहकारेण परिशेषाद्रागत्वसिद्धिः 'किमुत सम्यग्भक्तिमताम्' इत्येतत्कैमुत्यन्यायेन च द्वेषविरोधिन्येव द्रष्टव्या "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। किं पुनर्ब्राह्मणाः पुण्या" इत्यादौ। एवं 'मामात्मपरदेहेषु' इत्यनेन द्वेषस्य संसारहेतुत्वाभिधानात्तद्विरुद्धगुणोपाधिपरिहारेण परात्मगोचर राग एव भक्तिरूपः संसारनाशहेतुः। एतदेवोक्तम् 'मामप्राप्यैवे'ति। चकारात्पुलकादिरागलिङ्गेनापि रागत्वम् प्रसिद्धं हि 'पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेने' त्यादौ तत्। भक्तेर्गुणान्तरत्वे तु पृथग्लिङ्गताकल्पने गौरवम्। स च रागः केषाञ्चिदिष्टसाधताज्ञानजन्योऽपि यागादिवदिच्छारूप एव अस्माकं तु प्रीणाम्यनुरज्यामीच्छामित्यादि प्रतीते रागः पृथगेव, द्वेषवत् इच्छायां असिद्धमात्रविषयत्वात् रागस्य सिद्धासिद्धविषयत्वाच्च प्रत्युत तस्येच्छात्वादिनाऽपि ज्ञानजन्यत्वकल्पने गौरवाच्चेति दिक् इति।

अथ भक्तेर्लक्षणं किमिति चेत् अत्र सूत्रम्—

सा परानुरक्तिरीश्वरे ( भ० मी० द० अ० १ आ० सू० ६ )

अत्र सा परेति लक्ष्यनिर्देशः। शेषं लक्षणम्। परेति गौणीं व्यावर्तयति ईश्वर इति प्रकृताभिप्रायम् आराध्यविषयकराग एव सा आराध्यनिष्ठाराधनानुगुणगुणज्ञानमपि भक्त्यङ्गतया

भाषा

पाता है। इस वेदवाक्य में रस शब्द से राग कहा हुआ है तथा गीता में भी "रसोऽप्यस्य परं दृष्ट्वा निवर्तते०" भोजन छोड़ने से सब रस निवृत्त हो जाते हैं परन्तु रस ( राग ) रह जाता है और वह भी ब्रह्मसाक्षात्कार से नष्ट हो जाता है। यहाँ राग ही में रस शब्द का प्रयोग है। इससे भक्ति रागरूपी ही है। इति।

प्र०—भक्ति का लक्षण क्या है?

"सा परानुरक्तिरीश्वरे" ( भ० मी० द० अ० १ आ० १ सू० १ ) इस सूत्र से भक्ति का लक्षण कहा हुआ है। इस सूत्र का अक्षरार्थ यह है कि आराधनीय पदार्थ अर्थात् परमेश्वर में उत्तम

तत्रोपयुज्यते इतीश्वरपदेन सूच्यते इह तु परमेश्वरविषयकान्तःकरणवृत्तिविशेष एवानुरक्तिः तद्वैशेष्यं च लौकिकानुरागादौ सुग्रहम् यथोक्तं परमभक्तिमता प्रह्लादेन—

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ।। इति

(वि० पु० अ० १ अ० २०।१७

अत्र प्रीतिपदेन सुखनियतो विषयेषु राग एव लक्षितः अन्यथा प्रीतेः सुखरूपाया निर्विषयत्वेन विषयसप्तमी न स्यात् तस्याः सुखज्ञानरूपत्वेऽपि सुखविषयकतया विषयविषयकत्वासम्भवात् तस्मादनुरक्तिरेव सविषयाभक्तिः न च विषयजन्याप्रीतिरित्यर्थः जनकसप्तम्या अननुशासनात् किं च—

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युता भक्तिरच्युतेऽस्तु सदा त्वयि ।।

इति तदीयपूर्ववाक्ये भक्तेरीश्वरविषयतासिद्धौ प्रीतिपदेनापि तदेकवाक्यतया सैवोच्यते पूर्वं प्रतिजन्म, भक्तिप्रार्थनम् । इह तु विषयरागदृष्टान्तेन तस्या एव सर्वदाऽप्यपरिहार्यत्वप्रार्थनमिति विशेषः विषयजन्या प्रीतिरपि रागं विना न संभवतीति रागावश्यकत्वम् तथा च पातञ्जलसूत्रम् "सुखानुशयी रागः" ( पा० २।७ ) इति तस्यैव वक्ष्यमाणलिङ्गेषु व्यापनात् लघुत्वाच्च भक्तित्वम् न तु क्वचित् स्मरणस्य क्वचित् कीर्तनादेः, अननुगमात् न च तज्ज्ञानस्य तत्वम् द्वेषादिमत्स्वपि तत्प्रसङ्गात् नाप्याराध्यत्वेन ज्ञानं सा, पूजननमस्काराद्याराधनास्वननुगमात् अपि च बलाद्भयाद्वा नमस्कार्यत्वादिज्ञानवत्यपि भक्तोऽयमिति व्यवहारापत्तेः । ननु रागादिसहिताराध्यत्वज्ञानमिति चेत् तर्हि अनुराग एवास्तु अत एव—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।। ( गी० अ० १०।९ )
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।।

भाषा

अनुराग ही भक्ति है । और तात्पर्य इसका यह है कि उक्त अनुराग में उत्तमता तीन प्रकार की होती है जैसा कि "*याथात्म्यज्ञान*" इस प्राचीनों के श्लोक से उक्त अनुराग में तीन विशेषण लगाये गये हैं जिनके कारण उक्त राग को भक्ति कहते हैं । वे विशेषण ये हैं कि—

१—जिसके विषय में जो अनुराग हो वह उसमें आराध्यत्व ( पूज्यता ) के ठीक ज्ञान से हो ।

२—राग दृढ़ हो, अर्थात् उस राग से किसी समय में शोक न उत्पन्न हो सकै ।

३—राग वाला जिससे भिन्न है उसमें जब वह राग न हो ।

यहाँ यदि प्रथम विशेषण न दिया जाय तो आराध्यत्व के भ्रम से जो राग होता है जैसे

इत्यादौ तद्गतचित्तप्राणादीनां भजनमुक्तं न त्वाराध्यत्वेन ज्ञानवतामेव, अत एव श्रीकृष्णस्य कमनीयाकृतिदर्शनेनानुरक्तानां गोपीनामपि परमभक्तिफलं मुक्तिः स्मर्यते। अनुशब्दार्थस्तु न लक्षणान्तर्गतः किन्तु भगवन्महिमादिज्ञानात् अनु पश्चात् जायमानत्वाद-नुरक्तिरित्युक्तम्। अत्रेदमाकूतम्। माहात्म्यं महत्वम् तत्, विषयनिष्ठप्रभावविशेषवत्तया, तन्निष्ठमाधुर्यभावविशेषवत्तया, तन्निष्ठमुग्धभावविशेषवत्तया, तन्निष्ठसख्यभावविशेषवत्तया, च तज्ज्ञानस्याराध्यनिष्ठानुरागदार्ढ्यानुकूलतयाऽऽवश्यकत्वम् तत्राद्यम् अक्रूरस्य यथा 'प्रभो-रमून्यङ्घ्रिरजांस्यहो इति'। द्वितीयम् व्रजसुन्दरीणाम् 'वक्षः श्रियैकरमणं च भवाम दास्यः' इति। तृतीयम् वात्सल्यभाववतां मातृचरणप्रभृतीनाम् 'मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम्' इति। चतुर्थम् गोपादीनाम् 'पादसंवाहनं चक्रुः केचित्तस्य महात्मनः' इति। अत्र त्रयाणां प्रभावं पश्यतामपि न तत्स्फूर्तिरिति। ननु पित्रादिगोचरानुरागस्यापि प्रकृतभक्तित्वम् प्रसज्येत जगत एव परमेश्वरात्मकत्वात्। अथ विकारविशिष्ट एव तथात्वं वाच्यम् तथापि गोपीनां प्रादुर्भावावच्छिन्नेश्वरभक्तावव्याप्तिः, न यतः जीवोपाध्यनवच्छिन्नचैतन्यविषयानु-रक्तिरेव सा। एवं च प्रादुर्भावावच्छिन्ने परिपूर्णे च भक्तिः संगृहीता भवति। इति

अत्रेदमवधेयम् 'अथातो भक्तिजिज्ञासा'॥ १ ॥ 'सा परानुरक्तिरीश्वरे'॥ २ ॥ तत्र 'सेति' लक्ष्यस्य 'ईश्वर' इत्यालम्बनस्य 'अनुरक्ति' रित्युक्तरूपस्य रागस्य 'परा' इति तद्विशेषणानां च निर्देशः। वर्तिपदार्थस्यापि भक्तेः 'अथ शब्दानुशासनम् केषां शब्दानाम्' इति वत् सेति तदा परामर्शः विशेषणानि तु प्राचीनैः।

याथात्म्यज्ञानमूलो यः सुदृढः सर्वतोऽधिकः।
स्नेहो भक्तिरितिप्रोक्तस्तया मुक्तिर्न चान्यथा॥

इत्यत्र परिगणितानि। आराध्यत्वभ्रान्तिमूलस्य विशेषदर्शननिवर्त्यस्य विप्रलम्भकादि-गोचरस्य रागाभासस्य वारणायाराध्यत्वप्रमामूलत्वपर्यवसितमाद्यं विशेषणम् अनित्यत्वादि-दोषाक्रान्तगुर्वाद्यालम्बनस्य परिणामे शोकजनकस्य लौकिकविषयरागस्य व्यावर्तनाय नित्य-विषयकत्वपर्यवसन्नं द्वितीयम्। तथा चोक्तम्—

भाषा

निर्गुण पदार्थ को गुणी समझ कर उसके विषय में जो राग होता है वह भी भक्ति कहलाने लगेगा। और इस विशेषण के लगाने पर उसे 'भक्ति' नहीं कह सकते क्योंकि वह राग, पदार्थ ज्ञान से नहीं है किन्तु भ्रम (भूल) से है।

दूसरा विशेषण यदि न दें तो कामिनी आदि विषयों में जो अनुराग होता है उसे भी भक्ति कहना पड़ेगा और इस विशेषण के लगाने पर उसे भक्ति नहीं कह सकते क्योंकि वे सभी नष्ट होने वाले हैं। इसलिए उनके नाश से रागियों को उसी श्रेणी का शोक झेलना पड़ता है कि जिस श्रेणी

नोटः—पृष्ठ १४२०, १४२१ में कहे विषय अति उपयोगी नहीं हैं और भाषा करने पर भी दुर्बोध है, इससे अनुवाद नहीं किया गया।

प्रभवति विषयेषु येषु रागः ।
परिणमते विरतेषु तेषु शोकः ॥
त्वयि रुचिरुचिता नितान्तकान्ते ।
रुचिपरिपाकशुचामगोचरोऽसि ॥ इति

एवं भेदवादिनां मते स्वस्वनिष्ठभेदप्रतियोगिविषयस्य रागस्य निरसनाय तृतीयम् तदेव निरुपाधिकत्वम् अत्र च स्वं स स आत्मा निरुपाधित्वं च स्वस्वनिष्ठभेदाप्रतियोगिविषयकज्ञानमात्रजन्यत्वम् फलतः फलानुसन्धानाजन्यत्वपर्यवसितम् तेन सुखस्यापि फलतया तद्विषये रागे तज्ज्ञानजन्यत्वसत्त्वेऽपि नातिप्रसङ्गः ईश्वरशब्देन चेह नाद्वैतवेदान्तदर्शनसिद्धं मायोपाधिकचैतन्यमेव गृह्यते किन्तु निरुपाधिकं ब्रह्मापीति स्वरूपव्याकरणेनैवाग्रे स्फुटीभविष्यति स चायमुक्तरूपोपपन्नो रागः स्वात्मन्येव सम्भवी अन्यत्र तस्य निरुपाधिकताया अति दुर्लभत्वात् न ह्यन्यत्रेव कस्मादात्मनि प्रेमेति प्रष्टुं कश्चिदीष्टे प्रेमकारणस्यात्मत्वस्यातिप्रसिद्धत्वात् तथा च—
वाजसनेयिब्राह्मणोपनिषदि श्रूयते—

तदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । इति,
न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति । इति च
अत्र चात्मशब्दो जीवमीश्वरं तत्सामान्यभूतश्चैतन्यश्चात्मत्वसामान्याद्बोधयति एवं च

भाषा

का उनका राग होता है। देखिए, परमभक्त पण्डितवर का श्लोक "*प्रभवति०*" इसका यह अर्थ है कि हे परमेश्वर ! जिन जिन अन्य विषयों में जो जो राग होता है उन विषयों के नाश होने पर वह राग, शोक रूप से परिणत हो जाता है। केवल एक आप ही ऐसे हैं कि जिनमें राग, कदापि शोक रूप से परिणत नहीं होता किन्तु वह राग सदा राग ही बना रहता है, क्योंकि आप नित्य और सदा सुन्दर हैं। इसलिये आप ही के विषय में राग, उचित और सदा आनन्दकारी है।

तीसरा विशेषण यदि न लगाया जाय तो जीव और परमेश्वर के परस्पर में भेद मानने वाले दर्शनशास्त्रों के मत में जीव का जो परमेश्वर में राग है वह भी भक्ति कहलाने लगेगा। तात्पर्य यह है कि अपनी भक्ति, उसमें कदापि नहीं हो सकती जिससे कि आप भिन्न हैं अर्थात् आप जिससे अभिन्न हैं उसी में अपनी भक्ति हो सकती है क्योंकि 'भक्ति' उस अनुराग को कहते हैं जो स्वाभाविक हो अर्थात् किसी इच्छा से न हो। निचोड़ यह है कि ऐसा अनुराग अपना, अपने ही में होता है क्योंकि अपने से अत्यन्त भिन्न पुत्र, पत्नी आदि में भी जो अनुराग होता है वह अपने ही प्रयोजन से होता है न कि उनके प्रयोजन से—यह सभी पर विदित है और बृहदारण्यक उपनिषद् में भी "*तदेतत्प्रेयः*" "*न वा अरे*" इन वाक्यों से ऐसा ही कहा हुआ है और अपने में अपने राग का कोई कारण नहीं होता किन्तु वह आप ही आप रहता है तथा कोई पूछ भी नहीं सकता कि अपने में क्यों अपना अनुराग होता है ? और पूछे भी तो इससे अतिरिक्त कोई उत्तर नहीं हो

जीवानामीश्वरात्पारमार्थिके भेदे तेषां तत्रोक्ता भक्तिः सुतरामेव न सम्भवति स्वनिष्ठभेदप्रतियोगिविषयकस्य प्रेम्णः सोपाधितायाा भक्तित्वाभावप्रयोजिका लोकवेदसिद्धत्वात् स्पष्टीकृतश्चायमर्थः शुकाचार्यश्रीपादैः तथा हि—

व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम् ।
शनैर्निःसीमववृधे यथा कृष्णे त्वपूर्ववत् ॥ २६ ॥
( भा० स्कं० १० पू० अ० १३ )

इति श्री शुकाचार्येणोक्ति—

अ० १५, राजोवाच—ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत् ।
योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥ ४९ ॥
श्रीशुक उवाच—सर्वेषामपि भूतानां नृप स्वात्मैकवल्लभः ।
इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥ ५० ॥
तद्राजेन्द्र यथास्नेहः स्वस्वकात्मनि देहिनाम् ।
न तथा ममतालंवि पुत्रवित्तगृहादिषु ॥ ५१ ॥

भाषा

सकता कि "अपने तो आप ही हैं जिसके कारण दूसरों में राग होता है तो अपने में अनुराग का कारण क्यों पूछते हो" ? और यदि प्रश्नकर्त्ता आग्रह से उत्तर ही लेना चाहे तो उसको इसी उत्तर पर सन्तोष करना पड़ेगा कि "अपने तो आप ही हैं" इसी से अपना राग अपने ही में है अर्थात् अपने में अपना अनुराग स्वाभाविक है, इसमें कोई कारण नहीं है। यह विषय पूज्यपाद श्री शुकाचार्य का भी स्पष्ट कहा हुआ है कि—

"व्रजौकसां०" यशोदा के नन्दन श्री कृष्ण भगवान् पर व्रजवासियों का अपने पुत्रों की अपेक्षा जैसे पूर्व ही से अधिक और असीम स्नेह था वैसे जब ब्रह्मदेव ने सब वत्सों और वत्सपाल बालकों को हरण कर लिया तथा कृष्ण भगवान् ने स्वयं उन वत्सों और वत्सपालों का रूप धर एक वर्ष तक सब कामों को चलाया उस समय भी व्रजवासी मनुष्यों तथा गौओं का अपने अपने उन बनावटी वत्सों और बालकों पर पूर्व के वास्तविक वत्सों और बालकों की अपेक्षा अधिक और असीम स्नेह बढ़ गया ॥ २६ ॥

"ब्रह्मन्" राजा परीक्षित ने शुकदेव जी से कहा कि हे ब्रह्मन् ! यह कहा जाय कि दूसरे के पुत्र श्री कृष्ण भगवान् पर ऐसे अधिक प्रेम का होना जो कि अपने पुत्रों पर भी नहीं हुआ कैसे सम्भव में आ सकता है ? ॥ ४९ ॥

"सर्वेषां" श्री शुकदेव जी ने कहा कि हे नृप ! अपना आत्मा ही सब प्राणियों का स्वाभाविक परम प्रिय होता है और पुत्र तथा धन आदि आत्मीय वस्तु तो आत्मा के केवल उपकारी होने के कारण प्रिय हुआ करते हैं क्योंकि यह सबके अनुभव की बात है कि सब देहधारियों का अपने अपने आत्मा अर्थात् जिसको वे यह समझते हैं कि "यह मैं हूँ" उसमें जैसा प्रेम होता है वैसा प्रेम उनका आत्मीय पुत्र, धन, गृहादि में नहीं होता ॥ ५० ॥ ५१ ॥ परन्तु उक्त स्वाभाविक अपने में

देहात्मवादिनां पुंसामपि राजन्यसत्तम ।
यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् ॥ ५२ ॥
देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत्प्रियः ।
यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ॥ ५३ ॥
तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् ।
तदर्थमेव सकलं जगच्चैतच्चराचरम् ॥ ५४ ॥
कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥ ५५ ॥ इति

अन्तःकरणावच्छिन्नचैतन्यरूपतया विशेषरूपेभ्यो जीवात्मभ्यस्तु पूर्वाभिहितस्य सोपाधिकस्य निरूपाधिकस्य चेश्वरस्य भेद एव साम्व्यवहारिकप्रतियोगिकः साम्व्यवहारिकश्चे-

भाषा

अपने प्रेम का मूर्ख और पण्डित के भेदानुसार इतना ही भेद है कि—

"देहात्म०" मूर्ख देह ही को आत्मा मानते हैं, इसलिये उनका स्वाभाविक परम प्रेम देह में जैसा होता है वैसा देह के सम्बन्धी पुत्रादि में नहीं होता ॥ ५२ ॥

"देहोऽपि०" और पण्डित पुरुष देह को आत्मा नहीं समझता किन्तु यह समझता है कि आत्मा ( मैं देह से अन्य ही हूँ ) ऐसा समझता है । इसी से उसके लिए देह भी आत्मीय ही है, किन्तु पुत्रादि आत्मीयों की अपेक्षा अन्तरङ्ग है क्योंकि देह ही के सम्बन्धी पुत्रादि हैं, इस कारण पण्डित का स्वाभाविक परम प्रेम आत्मा ही में होता है न कि देह में। क्योंकि जब देह अत्यन्त वृद्ध मरणासम्भव हो जाता है अर्थात् जब यह निश्चय हो जाता है कि "अब यह देह नहीं रहेगा" तब भी आत्मा के सम्बन्धी ही होने से देह पर उसका प्रेम रहता है जिससे वह तब भी जीवन चाहता है ॥ ५३ ॥

"तस्मात्प्रिय०" इसलिए सब प्राणियों का अपना आत्मा ही परम प्रिय है और उसी के लिए स्थावर और सब जगत् प्रिय होता है ॥ ५४ ॥

"कृष्णमेन०" हे राजन् ! तुम इन कृष्ण को सब आत्माओं का आत्मा निश्चय करो अर्थात् इनको परमेश्वर समझो और वह परमेश्वर भी जगत् के हितार्थ ही देहधारी सा देख पड़ते हैं। तात्पर्य यह है कि मायोपाधिक चैतन्य रूपी ईश्वर से अन्तःकरणोपाधिक चैतन्य रूपी जीवात्मा, भिन्न नहीं हैं। इससे कृष्ण परमेश्वर, सब प्राणियों के आत्मा हैं, इसी कारण से अपने अपने पुत्रों की अपेक्षा व्रजवासी मनुष्यों और गौओं का उनमें अधिक स्नेह था और वे बनावटी वत्सपाल और वत्स भी कृष्ण ही अर्थात् व्रजवासी मनुष्यों और गौओं के आत्मा ही थे। इसी से अपने अपने वास्तविक पुत्रों अर्थात् पूर्व के वत्सपालों और वत्सों की अपेक्षा उन बनावटी वत्सपालों और वत्सों पर व्रजवासी मनुष्यों और गौओं का अधिक तथा असीम स्नेह हुआ ॥ ५५ ॥ तथा अपने में जो अपना राग है इसको निरुपाधिक प्रेम कहते हैं और निरुपाधिक होना ही तीसरा विशेषण है जो कि उक्त प्राचीन श्लोक में "सर्वतोऽधिकः" शब्द से कहा गया है ।

त्युपासकादुपास्यस्य भेदावलम्बमानाः सर्वेऽपि वेदान्तदर्शनसम्प्रदायागूढाभिप्रायाः सुतरामुपपद्यन्त इति न तद्विरोध इतीश्वरे भक्तिरभेदवाद एव सम्भवति न तूक्तसम्प्रदायग्रन्थानामापातोपनीततात्पर्यविषये भेदे कथमपीति फलितम् तदेतत्सर्वं मनसि निधायैव भगवान् भक्तेषु ज्ञानिनमन्ते गणयित्वोपसंजहार "ज्ञानी त्वात्मैव मे मतम्" इति। भेदः परस्परमेव भवतीति ब्रह्माभिन्नेभ्यो जीवेभ्यो भेदः कथं ब्रह्मणीति तु न शङ्कितव्यम् द्रव्याभिन्नेभ्यो

भाषा

अब इस बात पर ध्यान देना चाहिये कि सामान्य बुद्धि वालों का यह ध्यान कैसा उलटा है कि "जीव और ईश्वर के भेदवाद में ही जीव, ईश्वर का उपासक हो सकता है क्योंकि सेव्य और सेवक, दो होना चाहिए। और अभेदवाद में तो जब दोनों एक ही हैं तब उपासना बन ही नहीं सकती" क्योंकि यह प्रथम ही कहा जा चुका है कि एक का दूसरे में निरुपाधि प्रेम हो ही नहीं सकता तो ऐसी दशा में भेदवाद में भक्ति हो ही नहीं सकती और यदि हो सकती है तो अभेदवाद ही में, क्योंकि अपने में अपना प्रेम निरुपाधिक होता ही है। और जीव तो ईश्वर से भिन्न ही नहीं है, क्योंकि देवता प्रकरण में यह कहा जा चुका है कि सामान्य चैतन्य, ब्रह्म और वही चैतन्य, माया रूपी उपाधि लगा कर ईश्वर और माया के परिणाम अन्तःकरण रूपी छोटी उपाधि के वशीभूत होकर जीव कहलाता है अर्थात् विशेष चैतन्य ही का नाम जीव है।

अब ध्यान देना चाहिये कि विशेष सामान्य से भिन्न नहीं होता जैसे मनुष्य से ब्राह्मण आदि, समुद्र से वीची, तरङ्ग, फेन, बुद्बुद आदि, पृथ्वी से यव, गेहूँ आदि भिन्न नहीं होता। इसी रीति से जीव, ब्रह्म से भिन्न नहीं होता क्योंकि ब्रह्म, ईश्वर और जीव इन तीनों का चैतन्य रूपी अंश एक ही है तथा ईश्वर भी उपाधि के वशीभूत न होने से ब्रह्म ( सामान्य चैतन्य ) ही है, इसी से जीव की अपेक्षा वह भी सामान्य ही है और पूर्वोक्त भक्ति लक्षण के सूत्र में 'ईश्वर' शब्द से ब्रह्म और ईश्वर दोनों का ग्रहण है। इसी से ब्रह्म की उपासना, निराकार की और ईश्वर की उपासना, साकार की है क्योंकि उपाधि ही को आकार कहते हैं और जीव तो अन्तःकरण रूपी एक छोटी उपाधि के वशीभूत होने से चैतन्य विशेष रूपी है तो वह कैसे ईश्वर से भिन्न हो सकता है ? अब वह बात निकल आई कि ईश्वर में जीव का अनुराग अपने ही में है तथा निरुपाधिक है, इसी से वह भक्ति कहलाता है।

और अब इतनी ही शंका रह गई कि "जब चैतन्य एक ही है तब उपास्य और उपासक का भेद कैसे होगा ? परन्तु इसका समाधान यही है कि यद्यपि ईश्वर से जीव नहीं भिन्न है तथापि ईश्वर जीव से भिन्न ही हैं, इसी से ईश्वर उपास्य और जीव उपासक हैं। इस पर भी यह शंका होती है कि भेद अन्योन्य ही में होता है जैसे चैत्र का भेद मैत्र में और मैत्र का भेद चैत्र में अर्थात् ऐसा कदापि नहीं हो सकता कि चैत्र से तो मैत्र, अभिन्न हो और मैत्र से चैत्र भिन्न।

ऐसा ही जीव जब ईश्वर से अभिन्न है तो ईश्वर को भी जीव से अभिन्न ही होना चाहिए न कि भिन्न। और यदि ईश्वर, जीव से भिन्न है तो जीव को भी ईश्वर से भिन्न ही होना चाहिए। न कि अभिन्न। इसलिए यह कैसी बात है कि जीव तो ईश्वर से अभिन्न है परन्तु ईश्वर जीव से अभिन्न नहीं है किन्तु भिन्न ही है। परन्तु इस शंका का भी समाधान यही है कि अन्योन्य में भेद होने का

घटादिभ्यो द्रव्ये, समुद्राभिन्नेभ्यो वीचीतरङ्गबुद्बुदादिभ्यः समुद्रे पृथिवीविकारेभ्यो यवगोधूमादिभ्यः पृथिव्यां च भेदस्य विश्वजनीनानुभवैरेव निर्णीतत्त्वात्।

तथा च भगवत्पादाः—सत्यपि भेदापगमे नाथ ! तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥ इति।

किं बहुना 'तत्वमसि' 'अहं ब्रह्मास्मि' इत्यादीनि श्रौतमहावाक्यान्यप्यत एव जीवेषु ब्रह्माभेदमेवावगमयन्ति न जातु ब्रह्मणि जीवाभेदम् अन्यथा भेदान्यप्युद्देश्यविधेयोभय-

भाषा

नियम वहाँ ही होता है जहाँ कि दोनों अन्योन्य में सामान्य और विशेष न हों अर्थात् दोनों विशेष ही विशेष हों जैसे चैत्र और मैत्र, क्योंकि इनमें एक दूसरे का सामान्य नहीं है किन्तु दोनों का एक तीसरा मनुष्य रूपी सामान्य है। और सामान्य तथा विशेष में तो ऐसा ही होता है कि विशेष, सामान्य से अभिन्न और सामान्य तो विशेष से भिन्न ही होता है जैसे मनुष्य रूपी सामान्य से चैत्र वा मैत्र अभिन्न ही हैं, तथा मनुष्य रूपी सामान्य, चैत्र वा मैत्र से भिन्न ही है, और समुद्र भी वीची आदि से भिन्न ही है, ऐसा ही सब उदाहरणों में समझना चाहिए और प्रकृत में भी चैतन्य सामान्य रूपी ईश्वर से जीव यद्यपि अभिन्न है तथापि ईश्वर, जीव से भिन्न ही है। इसी से जैसे चैत्र के दोष, मनुष्य सामान्य में नहीं होते वैसे ही जीव के दोष भी ईश्वर में नहीं होते। और इसी रीति के अनुसार विशिष्टाद्वैत आदि सम्प्रदायों के साथ वास्तविक में अद्वैत दर्शन का कुछ भी विरोध नहीं है क्योंकि उन सम्प्रदायों का भी वास्तविक तात्पर्य, ईश्वर की उपासना ही में है न कि ईश्वर से जीव के भेद में और उपासना तो ईश्वर में जीव के भेद को लेकर बनी ही जाती है। बल्कि जीव में ईश्वर का भेद स्वीकार करने पर पूर्वोक्त प्रकार से ईश्वर में जीव की भक्ति हो ही नहीं सकती क्योंकि राग वाला जिससे भिन्न है उसमें उसका राग, उक्त रीति से निरुपाधिक नहीं हो सकता। और इसी अभिप्राय से उक्त तीसरे विशेषण का ऐसा स्वरूप नहीं कहा गया कि "जो अपना राग अपने से भिन्न में न हो वह भक्ति है" क्योंकि यदि ऐसा कहा जाता तो जीव से भिन्न ईश्वर में जीव का राग, निरुपाधिक कैसे होता ? किन्तु उसका स्वरूप ऐसा कहा गया कि 'राग वाला' जिससे भिन्न न हो उसमें उसका राग, भक्ति है। इस रीति से जीव का राग ईश्वर में निरुपाधिक सिद्ध हो गया, उसी को भक्ति कहते हैं। इसी तात्पर्य से श्री स्वामी शङ्कराचार्य ने कहा है कि—

"सत्यपि भेदा०" हे नाथ ! यद्यपि आप का भेद मुझमें नहीं है तथापि मैं ही आप का हूँ न कि आप मेरे हैं, क्योंकि तरङ्ग तो समुद्र का होता है परन्तु समुद्र कदापि तरङ्ग का नहीं होता।

अधिक क्या कहना है, जब कि स्वयं वेद ही इसी तात्पर्य से जीवों ही में ईश्वर के अभेद का बोध कराता है न कि ईश्वर में जीके अभेद का। देखिये उपनिषद् के अति प्रसिद्ध एक महावाक्य को "अहं ब्रह्मास्मि०" (अहं ब्रह्म अस्मि) अर्थात् मैं ब्रह्म हूँ यह वाक्य स्पष्ट रूप से जीव ही में ब्रह्म के

समभिव्याहृतस्याख्यातस्योद्देश्यसमानपुरुषत्वनियमेन 'असि' 'अस्मि' इत्यनयोः स्थानेऽसीत्यस्यापत्तेर्वारयितुमशक्यत्वात् अत एव जीवाय सार्वज्ञ्यदोषोऽपि न भगवत्पाद्यते उपपद्यते च चेतनत्वमपि जीवानाम् ।

तथा च श्रुतिः—वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । इति ध्वनितं चेदम् 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (वे० द० अ० २ पा० १ सू० १४) इति सूत्रे भगवता व्यासेन 'ज्ञानी त्वात्मैव मे मतम्' इति गीतायाम् (अ० ७ श्लो० १८) स्वयमेव भगवताऽपीति ।

स्पष्टीकृतश्चायमर्थः परमभक्तेन प्रह्लादेन—

त्वं वा इदं सदसदीश भवांस्ततोऽन्यो
माया यदात्मपरबुद्धिरियं ह्यपार्था ।

भाषा

अभेद को कहता है न कि ब्रह्म में जीवों के अभेद को, क्योंकि यदि उसको कहता तो इस वाक्य का यह स्वरूप होता कि '*ब्रह्माहमस्ति*' (ब्रह्म, मैं है)। जैसे 'मैं मनुष्य हूँ' इस वाक्य से मुझी में मनुष्य की एकता (अभेद) का बोध होता है न कि मनुष्य में मेरी एकता का, और मनुष्य में मेरी एकता नहीं है परन्तु यदि होती तो उसके बोध के लिये ऐसा ही कहा जाता कि 'मनुष्य, मैं है'। ऐसे ही मुझमें ब्रह्म की एकता (अभेद) है, इसी से वेद में यह कहा है कि 'मैं ब्रह्म हूँ' और ब्रह्म में जीव की एकता नहीं है अर्थात् भेद ही है, इसी से वेद में ऐसा नहीं कहा गया कि 'ब्रह्म, मैं है' तथा—

"*वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्*" (घटादि कार्य केवल कहने के लिये नाम मात्र हैं किन्तु उनकी अपेक्षा मृत्तिका रूपी कारण ही सत्य है) यह छान्दोग्य श्रुति और इसका अनुसारी "*तदनन्यत्वमारम्भण शब्दादिभ्यः*" (वेद० अ० २।१ सू० १४) यह व्याससूत्र भी अनन्तरोक्त अभिप्राय ही से है तथा इन्हीं सब युक्तियों और प्रमाणों को हृदय में लेकर गीता में श्री परमेश्वर ने ज्ञानी को चतुर्थ भक्त कह कर स्वयं यह कहा है कि—

"*ज्ञानीत्वात्मैव मे मतम्०*" मेरा (परमेश्वर का) यह मत (सिद्धान्त) है कि ब्रह्म ज्ञानीभक्त तो मेरा आत्मा ही है। तथा परमभक्त प्रह्लाद ने भी श्रीमद्भागवत स्कन्ध ७ अध्याय ९ श्लोक ३१ से अनन्तरोक्त विषय को स्पष्ट ही कह दिया है कि—

"*त्वं वा इदं०*" हे ईश! यद्यपि यह कार्य और कारण रूपी जगत् आप ही का स्वरूप है, आप से पृथक् नहीं है तथापि आप तो इस जगत् से अन्य ही हैं जैसे यव गोधूमादि, पृथिवी से अन्य नहीं हैं परन्तु पृथिवी उससे अन्य है और वीची, तरङ्ग बुद्बुद, आदि समुद्र से अन्य नहीं हैं परन्तु समुद्र, उनसे अन्य ही है अर्थात् विशेष सामान्य से अन्य नहीं होता परन्तु सामान्य, विशेष से अन्य ही होता है क्योंकि विशेष की उत्पत्ति से पूर्व और उसके नाश से पश्चात् भी सामान्य रहता है। प्रसिद्ध है कि वीची आदि समुद्र ही से उत्पन्न हो कर उसी में लीन होते हैं और मध्यदशा अर्थात् वीची आदि की दशा में समुद्र रहता ही है। इससे वीची आदि समुद्र से भिन्न नहीं है। तात्पर्य यह है कि कार्य, कारण से अभिन्न होता है। और कारण तो कार्य से भिन्न ही होता है। जैसे वृक्ष से

यद्यस्य जन्म निधनं स्थितिरीक्षणं च
तद्वै तदेव वसुकालवदष्टितर्वोः ॥
( भा० स्कं० ७ अ० ६ श्लो० ३१ ) इति

इयमेव च भक्तिर्मुक्तिफला—

ब्रह्मसंस्थोऽमृतत्वमेति ।
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ (यजु० अ० ३ मं० ६०)
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ।

इत्यादि श्रुतिस्मृतिभ्यः तथा च ( भ० मी० द० १ अध्या० १ आ० ) स्वप्नेश्वर-भाष्यसहितानि सूत्राणि ।

तत्संस्थस्यामृतत्वोपदेशात् ॥ ३ ॥

तस्मिन्नीश्वरे संस्था भक्तिर्यस्य स तथोक्तः तस्यामृतत्वं फलमुपदिश्यते 'ब्रह्मसंस्थोऽमृतत्वमेति' इति । तस्मान्निष्फलत्वगौणफलत्वनिबन्धना तदजिज्ञासा परिहृता भवतीति ।

ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः ॥ ४ ॥

भाषा

बीज और बीज से पृथिवी, भी भिन्न है परन्तु वृक्ष और बीज, पृथिवी से भिन्न नहीं है, ऐसे ही कारण और सामान्य रूपी आप से यह जगत् भिन्न नहीं है। इसी से जीवों के दोष (विषम दृष्टि और अल्पज्ञता आदि ) आप में नहीं हो सकते ॥ ३१ ॥

इसी भक्ति का फल मुक्ति है जैसा कि "*ब्रह्मसंस्थो०*" परमेश्वर का भक्त मुक्ति पाता है "*त्र्यंबकं यजा०*" जैसे अति पक्क फल बन्धन (ढेंपी) से छूट जाता है वैसे हम संसार-दुःख से छूट जायँ और मोक्ष से न छूटैं अर्थात् मोक्ष पावैं। इस बुद्धि से हम परमेश्वर की पूजा करते हैं इत्यादि वेद-वाक्यों में तथा "*मां च यो०*" जो मुझ ( परमेश्वर ) में एकान्त भक्ति करता है वह सत्व, रज, तम, गुणों को उल्लङ्घन कर मोक्ष पाता है।

"*देवान्*" इन्द्रादि देवताओं के भक्त, अन्त में इन्द्रादि को पाते हैं और मेरे ( परमेश्वर के ) भक्त भी अन्त में मुझे पाते हैं। इत्यादि गीतावाक्यों में कहा है और इसी विषय में ( भ० मी० द० अ० १ आ० १ ) शाण्डिल्य महर्षि के तीन सूत्र हैं जो भाष्यसहित अब दिखलाये जाते हैं।

*तत्संस्थस्यामृतत्वोपदेशात्* (३) उस ईश्वर में जिसकी संस्था ( भक्ति ) है उसके लिये अमृतत्व ( मोक्ष ) फल का वेद में उपदेश है कि '*ब्रह्मसंस्थोऽमृतत्वमेति*'। इसी से यह भक्ति, निष्फल नहीं है और न इसका फल अन्य फलों के ऐसा अनित्य है। इसलिये भक्ति विचाररूपी इस दर्शन का आरम्भ आवश्यक है। *ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः* (४) इस सूत्र का अर्थ प्रश्नोत्तररूपी है—

ननु ब्रह्मसंस्थाशब्देन ब्रह्मज्ञानमेवोच्यते न तद्भिन्नम् तथा चामृतत्वं तस्यैवेति वेद्ब्रूषे नैष दोषः संस्था भक्तिरेव न ज्ञानम् द्विषतस्तज्ज्ञानवतोऽपि तत्संस्थत्वव्यवहाराभावात् । राजाद्यनुरक्ताः खल्वमात्यास्तत्संस्था इति व्यपदिश्यन्ते न पुनः प्रतिपक्षभूपालाः । शब्दार्थनिःसार्या हि लोके वेदे चार्थाः अत एव—

विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् ।
सोऽब्रवीद्दृशसंतप्तो दुःखेनाश्रून्प्रवर्तयन् ॥

(म० भा० शा० अ० २६७ श्लो० ६५२६)

इत्यत्र पतिभक्तिः संस्थाशब्देनोक्ता तस्मात्संस्था भक्तिः एवं च "तन्निष्ठस्य मोक्षोपदेशात्" ( अ० १ पा० १।७ ) इति बादरायणीयसूत्रस्याप्ययमेवार्थोऽध्यवसेय इति ।

तयोपक्षयाच्च ॥ ५ ॥

तया भक्त्या मुक्तिं प्रति ज्ञानम् उपक्षयं यस्मात् चकार उक्तयुक्तिसमुच्चयार्थः गीतायाम् "देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि (अ० ७।१३) तथा प्रह्लादं प्रति भगवद्वाक्यम्—

"यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि" ॥

( वि० पु० अं० १ अ० २०।२१ ) इति

भाषा

प्र०—'ब्रह्मसंस्थो' इस अनन्तरोक्त श्रुति में संस्था, शब्द का क्यों भक्ति अर्थ किया जाता हैं, इसका ज्ञान अर्थ क्यों न हो ?

उ० १—उस श्रुति में 'संस्था' शब्द का भक्ति ही अर्थ है न कि ज्ञान, क्योंकि लोक में राजा के शत्रु को राजसंस्थ नहीं कहते अर्थात् प्रकृत में 'संस्था' शब्द का ज्ञान अर्थ होता तो राजा का शत्रु तो राजा को जानता ही है क्योंकि जानने के बिना शत्रुता ही नहीं हो सकती । इसलिये राजा के शत्रु को भी 'राजसंस्थ' कहते परन्तु ऐसा नहीं कहते हैं । इससे निश्चित है कि संस्था शब्द का ज्ञान अर्थ नहीं है । राजा के भक्त अमात्य आदि को लोक में राजसंस्थ कहते हैं, इससे यह सिद्ध है कि 'संस्था' शब्द का भक्ति अर्थ हैं, इसी से महाभारत में चिरकारिक के उपाख्यान में कहा है कि—

'विमृश्य तेन' गौतम ने उस काल में अपनी पत्नी की पतिभक्ति को उल्लङ्घन करना निश्चित कर दुःख से अश्रु गिराते हुए यह कहा । इस श्लोक में 'संस्था' शब्द का भक्ति ही में प्रयोग किया हुआ है। यहाँ भाष्यकार ने यह कहा है कि 'तन्निष्ठस्य मोक्षोपदेशात्' इस वेदान्त दर्शन के सूत्र का भी यही अर्थ समझना चाहिये जो कि इस सूत्र का है ।

उ० २—"तयोपक्षयाच्च" (५) इस कारण से भी अनन्तरोक्त श्रुति में 'संस्था' शब्द का ज्ञान अर्थ नहीं है किन्तु भक्ति ही अर्थ है, क्योंकि ज्ञान से केवल भक्ति होती है, और मुक्ति तो भक्ति ही से होती है जैसा कि गीता में "देवान्देवय०" इन्द्रादि देवताओं के भक्त इन्द्रादि को पाते हैं और मेरे ( परमेश्वर के ) भक्त भी मुझे पाते हैं, यह वाक्य है । तथा प्रह्लाद के प्रति भगवान् का यह वाक्य है कि—

"यथा ते०" जैसे भक्ति से युक्त हो कर तुम्हारा मन अटल मुझ में स्थित है वैसे मेरे अनुग्रह से

ननु 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे० उ०) इत्यत्र वेदनफलं मुक्तिः श्रुता तद्विरोधेन स्मृतीनामन्यार्थत्वं स्यादिति चेन्न अत्रापि तथैवोपक्षयात् तथा हि अतिमृत्युपदं न मुक्तौ रूढ्यम् किन्तु यस्यां सत्यां मृत्योरतिक्रम इति व्युत्पत्या यद्वा तदपेक्षया यतो भक्तेः मृत्योरतिक्रम इति व्युत्पत्या भक्तिमेवातिमृत्युपदमभिधत्ते उपपदविभक्त्यर्थापेक्षया कारकविभक्त्यर्थस्य बलवत्वात्—

"तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम्' ।। (गी० अ० १२।७)

इत्यादिना भक्तितो मृत्वतिक्रमप्राप्तेः । मंत्रश्च भवति "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्" इति । अत्र यजनं भक्तिः तथैव तत्कल्पव्याख्यानात् न चास्यां श्रुतौ भक्तेरसन्निधानम् ज्ञप्तावपि तुल्यत्वात् तस्मात् अनयाऽपि श्रुत्या ज्ञानस्योपक्षय एव प्रतीयत इति ।।

अथ यदि रागविशेष एव भक्तिस्तदासौ वैराग्यवैरिणी हेयैव रागत्वात् प्रमदापुत्रादिरागवदिति चेन्न संसारानुबन्धित्वस्य प्रमदारागादौ साध्यव्यापकस्य भगवद्विषये रागे

भाषा

तुम मोक्ष (विदेहकैवल्य) भी पावोगे ।

प्र०—जब कि वेद ही में "*तमेव विदित्वा*" (ब्रह्म के ज्ञान ही से 'अतिमृत्यु' मोक्ष पाता है। मोक्ष के लिये दूसरा उपाय नहीं है) कहा है तब उक्त गीतास्मृति का यह अर्थ नहीं लगाना चाहिये कि 'भक्ति से मोक्ष होता है' क्योंकि ऐसा अर्थ करने में इस श्रुति का विरोध पड़ जायगा । तब कैसे भक्ति से मोक्ष कहा जाता है ।

उ०—इसका भी यही उत्तर है कि उक्त श्रुति में अतिमृत्यु शब्द का मोक्ष अर्थ नहीं है किन्तु भक्ति ही अर्थ है अर्थात् मृत्यु संसार को जिसके द्वारा अतिक्रमण अर्थात् उल्लङ्घन कर जाय उसी को अतिमृत्यु कहते हैं । और मृत्यु का उल्लङ्घन भक्ति से होता है जैसा कि "*तेषामहं*" हे पार्थ ! उन मेरे भक्तों को मृत्युरूपी संसार से तुरत उद्धार करने वाला, मैं हो जाता हूँ । इत्यादि वाक्यों से गीता ही में कहा है । और "*त्र्यम्बकं यजामहे०*" इस पूर्वोक्त मंत्र में भी ऐसा ही कहा है क्योंकि उस मंत्र के कल्प-व्याख्यान में 'यज्' धातु का भक्ति अर्थ कहा है ।

प्र०—यदि भक्ति राग ही है तो उक्त तीन विशेषण लगाने से क्या हुआ ? क्योंकि विशेष्य भाग तो राज ही है जो कि वैराग्य का परम शत्रु और दोषों का शिरोमणि है बल्कि ऐसी दशा में भक्ति से संसार-दुःख के बढ़ने ही का भय है और मोक्ष की आशा तो इससे बहुत ही दूर है। तब किस प्रमाण से ऐसा विपरीत कहा जाता है कि भक्ति से मोक्ष होता है ?

उ०—संसार में कोई काम वा पदार्थ ऐसा नहीं होता कि जिसमें गुण ही हों, दोष एक भी न हो अथवा दोष ही हों गुण एक भी न हो। यह अन्य वार्ता है कि किसी काम वा पदार्थ में गुण अधिक और दोष अल्प अथवा दोष अधिक और गुण अल्प होते हैं तथापि दशा, पात्र और प्रयो-

साधनाव्यापकस्योपाधितया रागत्वहेतोराभासतामलीमसत्वात् न हि रागः सर्वत्रैव हेयो भवति किन्तु सांसारिकप्रमदादिविषयालम्बन एवाऽसौ तथा, भक्तिस्तु भगवदालम्बना कथमिव हेया भवेत् यथा 'सङ्गात्सञ्जायते कामः' इत्यादिना सकलानर्थमूलतया प्रतिपादितोऽपि सङ्गो न सकल एव वैराग्यवैरी किन्त्वसत्सङ्ग एव अधमालम्बनत्वात् उत्तमालम्बनस्त्वसौ वैराग्यस्य मुख्यमेव साधनं तद्वत् ।

यथोक्तम्—सङ्गः सर्वात्मना त्याज्यो यदि त्यक्तुं न शक्यते ।
सद्भिरेव स कर्तव्यः सतां संगो हि भेषजम् ॥ इति

भागवतेऽपि—तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषा ॥ इति ।

तथा च सूत्रम्—हेया रागत्वादिति चेन्नोत्तमास्पदत्वात्सङ्गवत् ( भ० मी० द० १ अ० २ आ० सू० १२ ) इति

मदीये नारायणकाव्ये १ सर्गेऽपि—
निदर्शनं सङ्गमवाप्य दर्शनादुपाधिमुद्धाव्य भवानुबन्धिताम् ।
न यत्र भक्तेरपि रागताभृतोऽनुमीयते बुद्धिमताऽपि हेयता ॥ २० ॥ इति दिक्

भाषा

जन के अनुसार वे ही काम वा पदार्थ समय समय पर संग्रह और त्याग करने के योग्य होते हैं। देखना चाहिये कि "*संगात्संजायते कामः*" इत्यादि वाक्यों और विचारों से संग ही सकल अनर्थों का मूल निश्चित है परन्तु यदि वही संग सज्जनों के साथ हो तो उससे मोक्ष पर्यन्त उत्तम फल का लाभ होता है। और इतना ही नहीं किन्तु सत्संग के बिना कोई उत्तम फल होता ही नहीं। इसी से परीक्षकों का यह श्लोक है कि—"*सङ्गः सर्वा०*" संग सर्वथा त्यागने के योग्य है किन्तु यदि उसका त्याग न हो सकै तो सज्जनों के साथ उसे ( संग ) करना चाहिये क्योंकि सत्संग सब दुःखों का एक मात्र औषध है और श्रीमद्भागवत में भी कहा है कि "*तुलयाम०*" भगवद्भक्तों के क्षणिक संग के साथ भी स्वर्ग और मोक्ष की तुलना हम नहीं कर सकते और मर्त्यलोक के सुखों की तो वार्ता ही क्या है? अब इसी संगरूपी दृष्टान्त के अनुसार राग को भी देखना चाहिये अर्थात् लौकिक वा पारलौकिक सभी पदार्थ दोषाक्रान्त होते हैं। इस कारण उनमें राग करने से उत्तम और निकृष्ट दोनों प्रकार के फल होने का सम्भव है परन्तु नित्यनिर्दोष परमेश्वर में अनुराग तो मोक्ष का प्रधान कारण है, इसमें क्या सन्देह हो सकता है? और पूर्वोक्त अभिप्राय ही से शाण्डिल्य महर्षि का यह सूत्र भी है कि "*हेयारागत्वादिचेन्नोत्तमास्पदत्वात्सङ्गवत्*" ( भ० मी० द० अ० १ आ० १ सू० १२ ) तथा मेरे रचित नारायण काव्य सर्ग १ में भी २० वाँ श्लोक उक्त अभिप्रायों से गर्भित यह है कि "*निदर्शनं सङ्गः*" यहाँ तक भक्ति का स्वरूप, लक्षण, प्रमाण और फल दिखलाये गये।

अब यह निश्चय किया जाता है कि मोक्ष के साधन तीन सुने जाते हैं—योग, ज्ञान और भक्ति, परन्तु इनमें भक्ति ही प्रधान है और इस विषय में अब ( भ० मी० द० अ० १ आ० २ )

मोक्षसाधनेषु च योगज्ञानभक्तिषु भक्तिरेव प्रधानम् तथा च (भ० मी० द० १ अ० २ आ० ) सूत्राणि सभाष्याणि—

सा मुख्येतरापेक्षितत्वात् ॥ १ ॥

आह्निकसमाप्तौ पुनः स्मरणाय सेति निर्देशः सा पराभक्तिर्मुख्या प्रधानम्। इतरैः आत्मज्ञानयोगादिभिः स्वोपकार्यतयाऽपेक्षितत्वात्।

छान्दोग्ये—"यो भूमा तत् सुखम्" इत्याद्युपक्रम्य आम्नायते—

आत्मैवेदं सर्वमिति स वा एष एवं पश्यन् एवं मन्वानः।
एवं विजानन् आत्मरतिरात्मक्रीड आत्मा पुनः स स्वराड्भवति॥ इति

अत्र आत्मरतिरूपायाः परभक्तेः पश्यन्निदर्शनम् अप्रियत्वादिभ्रमनिरासमुखेनाङ्गं भवति। यथा "दण्डी प्रैषानन्वाह" प्राचीनावीती "दोहयति" "अभिजानञ्जुहोति" इत्यादौ दण्डाद्यङ्गम् तथा दर्शनमपि तदङ्गम् मननविज्ञानयोरुक्तदर्शनार्थतया न्यायप्राप्तयोरनुवादः एवमात्मक्रीडादेरतिनैयत्यादर्थप्राप्तोऽनुवादः अन्यथा रत्युद्देशेन दर्शनादिविधौ दर्शनाद्युद्देशेन रत्यादिविधौ वा वाक्यानि भिद्येरन्। तस्मात् "शेषः परार्थत्वात्" ( पू० मी० अ० ३ प० १।२ ) इति न्यायेन दर्शनमङ्गम् अत एव—

भाषा

के शाण्डिल्यसूत्र भाष्यसहित दिखलाये जाते हैं कि—

*"सा मुख्येतरापेक्षितत्वात्"* यह (जो कि पूर्व में कही गयी) पराभक्ति मुख्य है क्योंकि आत्मज्ञान और योग आदि उससे अपने उपकार की अपेक्षा करते हैं जैसा कि छान्दोग्य उपनिषद् में *"यो भूमा तत्सुखम्"* (जो व्यापक है वह सुख रूपी है) इस प्रकरण में "आत्मैवेदम्" ( यह सब आत्मा ही है ) ऐसा देखता, ऐसा मनन करता, ऐसा विवेक करता हुआ आत्मरति और आत्मक्रीडासंयुक्त आत्मा विशेष रूप से 'स्वराट्' ( मोक्षभागी होता है ) कहा हुआ है। जैसे दण्डी *"प्रैषानन्वाह"* (दण्ड लिये यजमान प्रैष मंत्रों को बोलै) इत्यादि वेदवाक्यों के विषय में पूर्वमीमांसा के अनुसार यह सिद्ध है कि प्रैष मंत्र पढ़ने आदि कर्मों में दण्डधारण आदि अङ्ग अर्थात् उपकारी हैं और मनन, विवेक ये दोनों देखने के अंग हैं तथा आत्मक्रीड़ा भी आत्मरति रूपी भक्ति ही का अङ्ग है और यहाँ मोक्ष रूपी फल के लिये प्रधान रूप से आत्मरति रूपी भक्ति ही का विधान है क्योंकि *'भवति'* ( होता है ) इस एक क्रिया के होने से यह निश्चित होता है कि उक्त श्रुति एक ही वाक्य है और एक ही वाक्य से मुख्य करके एक ही काम का विधान हो सकता है और दूसरे काम यदि उस वाक्य में कहे रहते हैं तो उनका पृथक् विधान नहीं होता क्योंकि यदि ऐसा हो तो वह एक वाक्य टूट कर अनेक वाक्य हो जाय। इसलिए वे अन्य काम उसी विधान किये हुए मुख्य काम के अंग अर्थात् उपकारी होते हैं और उसी मुख्य काम से साक्षात् वह फल होता है जो कि उस वाक्य में कहा रहता है। मीमांसादर्शन में कही हुई इस दृढ़ व्यवस्था के अनुसार इस उपनिषद् में मोक्ष रूपी फल के लिए आत्मरति रूपी भक्ति का विधान है और आत्मक्रीड़ा ( प्रतिमापूजन )

भगवान्मनुरपि—यस्त्यक्त्वा प्राकृतं मोहं नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूतात्मा स गच्छेत्परमां गतिम् ॥
इत्यनेनात्मरतेः प्राधान्यमाहेति ।

प्रकरणाच्च ॥ २ ॥

प्रकरणं रतेरेव फलवत्त्वात् तस्यास्तत्प्रकरणस्थं दर्शनमङ्गं भवितुमर्हतीति ।

दर्शनफलत्वामति चेन्न तेन व्यवधानात् ॥ ३ ॥

अथ दर्शनस्यैव फलं स्वाराज्यलक्षणममृतत्वम् तथा च तस्यैव प्रकरणमिति वैपरीत्यमिति चेत् न तेन तच्छब्देन व्यवधानात् "स स्वराड् भवती" त्यत्र तच्छब्देन सन्निकृष्टात्मरतिमानेवोपस्थाप्यते न विप्रकृष्टः पश्यन्ति, व्यवहितोपस्थितौ कारणाभावात् । प्रकरणमेव कारणमिति चेन्न अन्योन्याश्रयात् ।

दृष्टत्वाच्च ॥ ४ ॥

दृष्टं हि लोके सौन्दर्यादिज्ञानस्य तरुण्यास्तरुणे रतेर्हेतुत्वम् न तु रतेर्ज्ञानहेतुत्वमिति दृष्टोपकारिकत्वादप्यङ्गत्वमवसीयते । दृष्टं च प्रकृतेर्निष्करुणत्वाल्पमहिमत्वाप्रियत्वादिज्ञानं मनोमालिन्यकारणम् भूतेषु, करुणाबहुलोऽव्याहतैश्वर्योऽजोऽतिशयितरूपाश्रय आत्मेतिज्ञानान्मालिन्यनिवृत्तिः ततः पराभक्तिरिति । अत एव गीयते—

भाषा

आत्मदर्शन आदि उसी भक्ति के अंग हैं जो कि इस वेदवाक्य में कहे हुए हैं । तथा 'यस्त्यक्त्वा' जो प्राकृतिक अज्ञान को छोड़ सबको अपना आत्मा समझ कर सदा आत्मरत ( भक्ति ) करता है वह मुनि मोक्ष पाता है । इस स्मृतिवाक्य में भी उक्त श्रुति के अनुसार भक्ति ही की मुख्यता कही है ।

"प्रकरणाच्च" (२) अनन्तरोक्त छान्दोग्य श्रुति में आत्मरति रूपी भक्ति ही का प्रकरण है क्योंकि मोक्ष रूपी फल के समीप में वही कही हुई है। "दर्शनफलत्वमितिचेन्न तेन व्यवधानात्" (३) अनन्तरोक्त श्रुति में यह नहीं कह सकते कि देखने ( ज्ञान ) ही का फल मोक्ष कहा हुआ है । इससे उसमें ज्ञान ही का प्रकरण है । क्योंकि 'सः' ( वह ) इस शब्द से आत्मरति ही का आकर्षण होता है । क्योंकि 'सः' शब्द के समीप में आत्मरति ही कही हुई है और देखने का 'सः' शब्द से आकर्षण नहीं हो सकता क्योंकि वह दूरवर्ती है और समीपवर्ती को छोड़ उसके आकर्षण में कोई कारण नहीं है ।

"दृष्टत्वाच्च" (४) लोक में भी ऐसा ही देखा जाता है कि बिना जाने रति ( भक्ति ) अर्थात् राग नहीं होता अर्थात् युवापुरुष में, उसके सौन्दर्यादि गुणों के ज्ञान हीं से युवती की रति ( भक्ति अर्थात् राग ) होती है परन्तु रति से ज्ञान का होना कहीं नहीं देखा जाता । इससे भी यह सिद्ध होता है कि भक्ति का कारण ज्ञान है और मोक्ष का कारण भक्ति ही है। और परमेश्वर को यदि कोई दयारहित और अल्प शक्ति जानै तो उसका मन मलिन हो जायगा । इसलिये उनको करुणामूर्ति सर्वशक्तिमान् और नित्य आत्मा जानने से मन की मलिनता दूर हो जाती है, तदनन्तर उनमें भक्ति होती है । इस रीति से मन की मलिनता की निवृत्ति ही के लिये ज्ञान आवश्यक है जैसा कि गीता में कहा है कि—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ( अ० ५, १७ ) इति

तथा आयुर्वेदेऽपि ( अष्टाङ्गहृदये अ० १।२३ )

धीर्धैर्यात्मादिविज्ञानं मनोदोषौषधं परम् । इति

अत एव तद्भावाद्वल्लवीनाम् ॥ ५ ॥

यत एव ज्ञानं दृष्टोपकारकमङ्गम् अत एव दृष्टोपकारं निरस्य मनोमालिन्यादिबाधात् प्रधानभगवदनुरागमात्रेण वल्लवीनां मुक्तिः स्मर्यते यथा—

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया सती ॥ (वि० पु० अं० ५ अ० १३)
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥ १५ ॥ इति

अत्र सुखदुःखलिङ्गेनानुरागोऽनुमीयते न मुक्तिरिति वाक्यार्थः । द्वारबाधादनवहतकृष्णलेनापि कर्मणा फलसिद्धिरिव तासां रागान्मुक्तिः तस्मादप्यवगम्यते ज्ञानमङ्गमेवेति

भाषा

"*तद्बुद्धयः०*" ज्ञान से जिनका कल्मष (मलिनता) दूर हो गया है और जिनकी बुद्धि, आत्मा ( अन्तःकरण ) तथा निष्ठा और एकान्त भक्ति परमेश्वर में है वे मोक्ष पाते हैं । तथा आयुर्वेद में भी कहा है कि "*धीर्धैर्या०*" अच्छी बुद्धि, धीरता और अपने आत्मा का निश्चय, ये सब मन के दोषों के परम औषध हैं । इस वाक्य में मन के दोषों की निवृत्ति ही ज्ञान का फल कहा है ।

"*अत एव तद्भावाद्वल्लवीनाम्* ( ५ ) ज्ञान केवल मन के दोषों का नाश करता है न कि उससे साक्षात् मोक्ष होता है और यदि मन के दोषों का नाश दूसरे प्रकार से हो जाय तो भक्ति में भी ज्ञान का कोई उपयोग नहीं है । इसी से भगवद्भक्ति रूपी प्रधान कारण मात्र से गोपियों की मुक्ति होने की यह स्मृति है कि—

"*तदप्राप्ति०*" यह प्रसिद्ध व्यवस्था है कि दुःखभोग से पापों का और सुखभोग से पुण्यों का नाश होता है और पाप तथा पुण्य इन दोनों का जब पूर्ण नाश हो जाता है तभी मोक्ष होता है। इस व्यवस्था को मन में रख, इस उक्त स्मृति के अर्थ पर ध्यान देना चाहिये। इस स्मृति का यह अक्षरार्थ है कि कृष्ण भगवान् के वियोगमूलक महादुःख से जिसके सब पाप नष्ट हो गये तथा कृष्ण भगवान् के निरन्तर ध्यान के कारण महासुख से जिसके सब पुण्य नष्ट हो गये वह गोप की कन्या, जगत् के कारण, परब्रह्मरूपी कृष्ण भगवान् को स्मरण करती हुई, मरकर मोक्ष को प्राप्त हुई । और भाव इसका यह है कि जब कृष्ण भगवान् के ध्यान से उसको महासुख हुआ तब कृष्ण भगवान् में उसके दृढ़ अनुराग होने का निश्चय होता है और केवल उसी अनुराग रूपी भक्ति से उसको मोक्ष हुआ। तथा उसका मन सुखदुःख के भोग हीं से पूर्व ही निर्दोष हो चुका था । अब यहां ध्यान देना चाहिये कि वह कृष्ण भगवान् को परब्रह्म रूपी नहीं जानती थी, इससे उसमें ब्रह्मज्ञान का संभव ही नहीं है

प्रधानत्वे तु तदभावे फलं न स्यात् चिन्ता च न ब्रह्मात्मैक्यज्ञानम् श्रवणमननाद्यसंभवात्। किन्त्वनुरागनियताऽनुस्मृतिरेव। न चायमर्थवादः अपूर्वार्थत्वात् तत्सन्निधौ विध्यभावाच्चेति।

भक्त्या जानातीति चेन्नाभिज्ञप्त्या साहाय्यात् ॥ ६ ॥

इदानीं श्रुतिविरोधेन प्रकरणस्थानसमाख्यालिङ्गबाधमाक्षिप्य समाधीयते। यथा श्रुतं गीतायाम् ( अ० १८।५५ )

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥ इति

तत्र 'ऐन्द्र्यागार्हपत्यमुपतिष्ठत' इतिवत्कारकश्रुत्या बलीयस्या भक्तेर्ज्ञानहेतुत्वमवसीयते। यद्यपि 'दृष्टत्वा' दित्यनेन दृष्टोपकारे प्रत्यक्षगम्ये न श्रुतेरवकाशः तथापि ब्रह्मविषयिण्या रतेर्ब्रह्मविषयकज्ञानोपकार्यत्वं न प्रत्यक्षगम्यम् किन्तु तरुण्यादे रतौ तथा दर्शनेन ब्रह्म-

भाषा

और चिन्ता मात्र करने से ब्रह्म और आत्मा के अभेद का ज्ञान नहीं हो सकता क्योंकि श्रवण और मनन के बिना वह होता ही नहीं तथा वह गोप-कन्या, स्त्री और शूद्र जाति होने के कारण श्रवण और मनन की अधिकारिणी भी न थी, इसलिये यहाँ यही कहा जा सकता है कि अटल राग रूपी भक्ति से गँठी हुई भगवान् की स्मृति ही उसके मोक्ष का कारण है।

"*भक्त्या जानातीति चेन्नाभिज्ञप्त्या साहाय्यात्*" ( ६ ) इस सूत्र का अर्थ प्रश्नोत्तर रूपी है कि—

प्र०—"*भक्त्या मां०*" भक्ति से मेरा ( परमेश्वर का ) अभिज्ञान (परिचय) करता है जैसा कि वास्तविक में मैं हूँ, तब मेरे तत्व को जान कर तदनन्तर मोक्ष पाता है। इस गीतावाक्य में भक्ति से अभिज्ञान का होना कहा है तो भक्ति क्यों नहीं ज्ञान का कारण है ?

उ०—भक्ति से ज्ञान का होना लोक में नहीं देखा जाता किन्तु ज्ञान ही से भक्ति का होना देखा जाता है। इसी से भक्ति, ज्ञान का कारण नहीं है और इस वाक्य का कोई दूसरा ही अर्थ होगा, क्योंकि भगवान् अनुभव से विरुद्ध बात नहीं कह सकते।

प्र०—इस गीतावाक्य का जो अर्थ कहा गया है वह अनुभव से विरुद्ध नहीं है, क्योंकि ब्रह्म के ज्ञान से ब्रह्म में भक्ति का होना प्रत्यक्ष नहीं है किन्तु युवा के ज्ञान से युवती की भक्ति प्रत्यक्ष है उसी दृष्टान्त से यह अनुमान मात्र किया जाता है कि 'ब्रह्म के ज्ञान से ब्रह्म में भक्ति होती है' और इस अनुमान का गीतावाक्य से बाध हो सकता है क्योंकि 'अनुमान' नाम है लिङ्ग का और लिङ्ग 'श्रुति' ( विभक्ति ) अर्थात् उक्त वाक्य में (भक्ति) 'आ' (से) की अपेक्षा दुर्बल होता है जैसा कि पूर्व ही "क्षुद्रोपद्रवविद्रावण" प्रकरण में ब्राह्मण भाग के वेद होने के ३४ संख्या के प्रमाण में "ऐन्द्र्यागार्हपत्यमुपतिष्ठते" इस वेदवाक्य पर कहा जा चुका है, तब कैसे ज्ञान को भक्ति का कारण कहा जाता है ?

उ०—उक्त गीतावाक्य में केवल 'ज्ञान' शब्द नहीं है किन्तु उसके साथ 'अभि' शब्द भी है, अर्थात् यह कहा है कि "भक्ति से मेरा अभिज्ञान करता है" और पूर्व ही जाने हुए के ज्ञान को अभिज्ञान कहते हैं। अब ध्यान देना चाहिये कि इस वाक्य का यह तात्पर्य है कि पूर्व, प्रथम

